श्रीपाणिनिमहामुनिविरचितः

# अष्टाध्यायीसूत्रपाठः

सरलाख्यटीकालङ्कृतः ।



श्रीगुरुप्रसादशास्त्री ।

पण्डितराज-श्रीस्नेहिरामशास्त्रिणा समर्पितम्-
श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालीयाष्टा-
द्वाविंशकुसुमम् ।



श्रीपाणिनिमहामुनिप्रणीतः

# अष्टाध्यायीसूत्रपाठः

श्रीगुरुप्रसादशास्त्रिभिर्विरचितया बालोपयोगिन्या परीक्षोपयोगिन्या
च सरलाख्यया वृत्त्या विराजितः ।

( सबसे उत्तम सुन्दर सस्ता संस्करण )

प्रकाशकः
भार्गवपुस्तकालयः,
गायघाट, काशी ।

प्रथमं संस्करणम् } १९९४ वि० { मूल्यम् ॥) सजिल्द ॥=)

# अष्टाध्यायी

श्रीपाणिनि महामुनि प्रणीत अष्टाध्यायीके महत्त्वके विषयमें कुछ लिखना सूर्यको दीपक दिखाना है क्योंकि यह अष्टाध्यायी ही व्याकरण-शास्त्र है। वार्त्तिक, महाभाष्य, काशिका, शब्दकौस्तुभ, सिद्धान्तकौमुदी, मनोरमा, शेखर आदि सभी व्याकरणग्रन्थ इस अष्टाध्यायी की (साक्षात्परम्परारूपसे) टीका हैं। इसीलिए बालकोंको प्रारम्भमें ही अष्टाध्यायी कण्ठ करानेकी प्राचीन प्रणाली थी। इस प्रणालीसे लाभ भी बहुत था, क्योंकि-'किस सूत्र से किस पदकी अनुवृत्ति आई' 'कौन सूत्र पूर्व है' कौन सूत्र पर है' इत्यादि आवश्यक विषय अष्टाध्यायीके अनुशीलनके विना अन्य किसी उपाय से जाने नहीं जा सकते। अतः अष्टाध्यायीका कण्ठ करना सर्व प्रथम आवश्यक है।

# सरला टीका

परन्तु अष्टाध्यायी कण्ठ करते व अभ्यास करते समय यदि सूत्रोंकी प्रचलित वृत्ति भी कण्ठ करा दी जाए तो बालकोंके लिए अत्यन्त हितकारक हो, क्योंकि जो विषय बाल्य अवस्थामें सरलतासे उपस्थित किया जा सकता है वह अधिक अवस्था होनेपर जल्दी उपस्थित नहीं किया जा सकता। और सूत्रोंकी वृत्ति तथा उदाहरण कण्ठ कर लेने से शब्दोंके प्रयोगमें तथा परीक्षाओंमें बड़ी सुविधा होती है। अतः सिद्धान्तकौमुदीके अनुसार इस सरला टीकामें सूत्रोंकी वृत्ति तथा उदाहरण भी हमनें दिए हैं। और जिन सूत्रोंकी वृत्ति लघुकौमुदीमें या सिद्धान्त-कौमुदीमें नहीं है उनकी वृत्ति काशिका तथा सम्प्रदायोक्त प्रणालीसे नई बनाकर दी गई है। इससे परीक्षार्थी विद्यार्थियोंको बहुत लाभ पहुंचेगा।

और सिद्धान्तकौमुदीमें बहुतसे सूत्रोंकी वृत्तिके न रहने के कारण विद्यार्थियोंको सत्रोंका अर्थ याद करनेमें जो कठिनता होती थी वह अब न होगी।

किञ्च सरलाटीकाके अनुसार वृत्ति कण्ठ कर लेनेसे मध्यमाके खण्डों के विद्यार्थियोंको तद्धित आदिके याद करनेमें भी अत्यन्त सहायता मिलेगी। अतः आशा है सभी छात्र इस अष्टाध्यायीकी १—१ प्रति अवश्य अपने पास रखेगें और नित्यकी आवृत्तिमें भी इसे स्थान देगें।

यदि हमारी आविष्कृत इस प्रणालीसे अष्टाध्यायीके सूत्रोंको तथा उनकी वृत्तिको छात्र कण्ठस्थ कर लेगें तो उन्हें परीक्षाम तथा नित्यके प्रयोगोंमें भी बड़ी सुविधा होगी यह हमारा दृढ विश्वास हैं।

यह प्रसिद्ध है कि—जो छात्र रोज नियमपूर्वक अष्टाध्यायीकी आवृत्ति करते हैं—वे कभी मूर्ख नहीं रह सकते, अतः अध्यापकोंको आवश्यक है कि—प्रत्येक छात्रको अष्टाध्यायी कण्ठ करावें। फिर इसका चमत्कार देखें।

यदि इससे छात्रमण्डलका कुछ भी लाभ होगा तो हम अपने परिश्रम को सफल समझेंगे।

किञ्च—मूल अष्टाध्यायीके मूल्यमें ही विस्तृतटीका सहित इस अष्टाध्यायीको देनेका शुभ—आयोजन करनेके लिए सुप्रसिद्ध भार्गव पुस्तकालय, गायघाट काशीके मालिकोंको छात्र मण्डलकी ओरसे हम शतशः धन्यवाद देते हैं।

श्रीराजस्थांन संस्कृत-कालेज,<br>मीरघाट, काशी।<br>भाद्र. शु. ५. १९९४।

निवेदक—<br>श्रीगुरुप्रसादशास्त्री



स्वर्गीय पं० रघुनन्दनप्रसादशास्त्री, आयुर्वेदाचार्य,
( टीकाकार के दिवङ्गत कनिष्ठभ्राता )




श्रीगणेशाय नमः ।

श्रीपाणिनिमुनिप्रणीतः–

# अष्टाध्यायीसूत्रपाठः ।

## * सरलालङ्कृतः *

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाऽज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥



श्रीगणेशाय नमः ।

श्रीपाणिनिमुनिप्रणीतः-

# अष्टाध्यायीसूत्रपाठः ।

## * सरलालङ्कृतः *

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाऽज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥

# अथ प्रथमोऽध्यायः ।

## प्रथमः पादः ।

१ वृद्धिरादैच् ।
२ अदेङ् गुणः ।
३ इको गुणवृद्धी ।
४ न धातुलोप आर्धधातुके ।
५ क्ङिति च ।
६ दीधीवेवीटाम् ।
७ हलोऽनन्तराः संयोगः ।
८ मुखनासिकावचनोऽनुनासिकः ।
९ तुल्यास्यप्रयत्नं सवर्णम् ।
१० नाज्झलौ ।
११ ईदूदेद्द्विवचनं प्रगृह्यम् ।
१२ अदसो मात् ।
१३ शे ।
१४ निपात एकाजनाङ् ।

*** श्रीगुरुप्रसादशास्त्रिकृता सरला ***

(१) आदैच्च वृद्धिसंज्ञः स्यात् । (२) अदेङ् च गुणसंज्ञः स्यात् । (३) गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते । (४) धात्वंशलोपनिमित्ते-आर्धधातुके परे इको गुणवृद्धी न स्तः । (५) गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। (६) दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। (७) अज्भिरव्यवहिता हलः संयोगसञ्ज्ञाः स्युः । (८) मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसञ्ज्ञः स्यात्। (९) ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसञ्ज्ञं स्यात् । (१०) आकारसहितोऽच् आच्, सच हल्चेत्येतौ मिथः सवर्णौ न स्तः। (११) ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । १२ अस्मात्परावीदूतौ प्रगृह्यौ स्तः । (१३) 'शे' इत्ययं प्रगृह्यः स्यात् । (१४) एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् ।

१५ ओत्[1] ।
१६ सम्बुद्धौ[2] शाकल्यस्येतावनार्षे ।
१७ उञः[3] ।
१८ ऊँ[4] ।
१९ ईदूतौ[5] च सप्तम्यर्थे ।
२० दाधा[6] घ्वदाप् ।
२१ आद्यन्तवदेकस्मिन्[7] ।
२२ तरप्तमपौ[8] घः ।
२३ बहुगणवतुडति[9] संख्या ।
२४ ष्णान्ता[10] षट् ।
२५ डति[11] च ।
२६ क्तक्तवतू[12] निष्ठा ।
२७ सर्वादीनि[13] सर्वनामानि ।
२८ विभाषा[14] दिक्समासे बहुव्रीहौ ।
२९ न बहुव्रीहौ[15] ।
३० तृतीयासमासे[16] ।
३१ द्वन्द्वे[17] च ।

---

(१) ओदन्तो निपातः प्रगृह्यः स्यात् । (२) सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । (३) उञ इतौ वा प्रगृह्यः स्यात् । (४) उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च 'ऊँ' इत्ययमादेशो वा स्यात् । (५) सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात् । (६) दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः, दाप्दैपौ विना । (७) एकस्मिन् क्रियमाणं कार्यमादावन्त इव स्यात् । (८) तरप्तमपौ घसंज्ञौ स्तः । (९) एते संख्यासंज्ञाः स्युः । (१०) षान्ता नान्ता च संख्या षट्सञ्ज्ञा स्यात् । (११) डत्यन्ता संख्या षट्संज्ञा स्यात् । (१२) क्तक्तवतू निष्ठासंज्ञौ स्तः । (१३) सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । (१४) अत्र सर्वनामता वा स्यात् । (१५) बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । (१६) तृतीयासमासे सर्वनामता न स्यात् । (१७) द्वन्द्वे सर्वनामसञ्ज्ञा न स्यात् ।

३२ विभाषा[1] जसि ।

३३ प्रथमचरमतयाऽल्पाऽर्ध-कतिपयनेमाश्च[2] ।

३४ पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायामसंज्ञायाम्[3] ।

३५ स्वमज्ञातिधनाख्यायाम्[4] ।

३६ अन्तरं बहिर्योगोपसंव्यानयोः[5] ।

३७ स्वरादिनिपातमव्ययम्[6] ।

३८ तद्धितश्चासर्वविभक्तिः[7] ।

३९ कृन्मेजन्तः[8] ।

४० क्त्वातोसुन्कसुनः[9] ।

४१ अव्ययीभावश्च[10] ।

४२ शि सर्वनामस्थानम्[11] ।

४३ सुडनपुंसकस्य[12] ।

४४ नवेति विभाषा[13] ।

(१) जसाधारं शीभावाख्यं यत्कार्यं तत्र कर्तव्ये द्वन्द्वे सर्वनामसंज्ञा वा स्यात् । (२) एते जसः कार्यं प्रति सर्वनामसंज्ञा वा स्युः । (३) एतेषां व्यवस्थायामसंज्ञायां गणपाठात् सर्वत्र या प्राप्ता सर्वनामसंज्ञा सा जसि वा स्यात् । (४) ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता सञ्ज्ञा सा जसि वा स्यात् । (५) बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् ।

(६) स्वरादयो निपाताश्चाऽव्ययसंज्ञा स्युः । (७) यस्मात् सर्वा विभक्तयो नोत्पद्यन्ते स तद्धितान्तोऽव्ययसंज्ञः स्यात् । (८) कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । (९) एतदन्तमव्ययं स्यात् । (१०) अयमव्ययं स्यात् । (११) 'शि' इत्येतदुक्तसंज्ञं स्यात् । (१२) स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य । (१३) निषेधविकल्पयोर्विभाषासञ्ज्ञा स्यात् ।

४५ इग्यणः संप्रसारणम्[1]।
४६ आद्यन्तौ टकितौ[2]।
४७ मिदचोऽन्त्यात्परः[3]।
४८ एच इग्घ्रस्वादेशे[4]।
४९ षष्ठी स्थानेयोगा[5]।
५० स्थानेऽन्तरतमः[6]।
५१ उरण्रपरः[7]।
५२ अलोऽन्त्यस्य[8]।
५३ ङिच्च[9]।

५४ आदेः परस्य[10]।
५५ अनेकाल्शित् सर्वस्य[11]।
५६ स्थानिवदादेशोऽनल्विधौ[12]।
५७ अचः परस्मिन् पूर्वविधौ[13]।
५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु[14]।
५९ द्विर्वचनेऽचि[15]।

(१) यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसञ्ज्ञः स्यात्। (२) टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः। (३) अचां मध्ये योऽन्त्यस्तस्मात्परः तस्यैवान्तावयवो मित् स्यात्। (४) आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। (५) अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या। (६) प्रसङ्गे सति सदृशतम आदेशः स्यात्। (७) 'ऋ' इति त्रिंशतः संज्ञा, तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। (८) षष्ठीनिर्दिष्टाऽन्त्यस्याल आदेशः स्यात्। (९) अयमप्यन्त्यस्यैव स्यात्। (१०) परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। (११) अनेकाल् शिच्चाऽऽदेशः सर्वस्य भवति। (१२) आदेशः स्थानिवत्स्यात्, न तु स्थान्यलाश्रयविधौ। (१३) परनिमित्तो योऽजादेशः स स्थानिवत्स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। (१४) पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। (१५) द्वित्वनिमित्तेऽचि परे अच आदेशो न स्यात् द्वित्वे कर्तव्ये।

६० [1]अदर्शनं लोपः ।
६१ प्रत्ययस्य लुक्[2]श्लुलुपः ।
६२ प्रत्यय[3]लोपे प्रत्ययलक्षणम् ।
६३ न [4]लुमताऽङ्गस्य ।
६४ [5]अचोऽन्त्यादि टि ।
६५ अलोऽन्त्या[6]त् पूर्व उपधा ।
६६ [7]तस्मिन्निति निर्दिष्टे पूर्वस्य ।
६७ [8]तस्मादित्युत्तरस्य ।
६८ [9]स्वं रूपं शब्दस्याशब्दसंज्ञा ।
६९ अणुदित्[10]सवर्णस्य चाप्रत्ययः ।
७० [11]तपरस्तत्कालस्य ।
७१ [12]आदिरन्त्येन सहेता ।
७२ येन विधिस्तद[13]न्तस्य ।
७३ वृद्धिर्यस्या[14]चामादिस्तद्-
वृद्धम् ।
७४ [15]त्यदादीनि च ।

(१) प्रसक्तस्याऽदर्शनं लोपसंज्ञं स्यात् । (२) लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । (३) प्रत्यये लुप्तेपि तदाश्रितं कार्यं स्यात् । (४) लुमता शब्देन लुप्ते तन्निमित्तमङ्ग-कार्यं न स्यात् । (५) अचां मध्ये-योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । (६) अन्त्यादलःपूर्वो वर्ण उपधासंज्ञःस्यात् (७) सप्तमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् । (८) पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ।

(९) शब्दस्य स्वरूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना । (१०) अविधीयमाणोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । (११) तः परो यस्मात् स च, तात्परश्चोच्चार्यमाण-समकालस्यैव संज्ञा स्यात् (१२) अन्त्ये-नेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । (१३) विशेषणं तदन्तस्य संज्ञा स्यात्, स्वस्य च रूपस्य । (१४) यस्य समुदायस्य अचां मध्ये आदिवृद्धिः तद्वृद्धसंज्ञं स्यात् । (१५) त्यदादीनि वृद्धसंज्ञानि स्युः ।

७५ एङ् प्राचां देशे ।

(वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुक्पञ्चदश ॥ )

## द्वितीयः पादः ।

१ गाङ्कुटादिभ्योऽञ्णिन्ङित् ।
२ विज इट् ।
३ विभाषोर्णोः ।
४ सार्वधातुकमपित् ।
५ असंयोगाल्लिट् कित् ।
६ इन्धिभवतिभ्यां च ।
७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।
८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।
९ इको झल् ।
१० हलन्ताच्च ।
११ लिङ्सिचावात्मनेपदेषु ।
१२ उश्च ।
१३ वा गमः ।
१४ हनः सिच् ।

(१) एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्यात् देशाभिधाने । इति प्रथमः पादः ।

(२) गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । (३) विजेः पर इडादिप्रत्ययो ङिद्वत् । (४) ऊर्णोतेः पर इडादिः प्रत्ययो वा ङित्स्यात् । (५) अपित्सार्वधातुकं ङिद्वत्स्यात् । (६) असंयोगात्परोऽपिल्लिट् कित्स्यात् । (७) आभ्यां परोऽपिल्लिट् कित्स्यात् । (८) एभ्यः सेट् क्त्वा कित्स्यात् । (९) एभ्यः सन् क्त्वा च कितौ स्तः । (१०) इगन्ताज्झलादिः सन् कित् स्यात् । (११) इक् समीपाद्धलः परो झलादिः सन् कित् स्यात् । (१२) इक्समीपाद्धलः परौ झलादी लिङ्, आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । (१३) ऋवर्णात्परौ झलादी लिङ्, तङ्परः सिच्चेत्येतौ कितौ स्तः । (१४) गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । (१५) हनः सिच कित्स्यात् ।

१५ यमो[1] गन्धने ।
१६ विभाषो[2]पयमने ।
१७ स्थाघ्वो[3]रिच्च ।
१८ न क्त्वा सेट्[4] ।
१९ निष्ठा[5] शीङ्स्विदिमिदिक्ष्विदिधृषः ।
२० मृषस्तितिक्षायाम्[6] ।
२१ उदुपधाद्[7]भावादिकर्मणोरन्यतरस्याम् ।
२२ पूङः[8] क्त्वा च ।
२३ नोपधा[9]त्थफान्ताद्वा ।
२४ वञ्चिलुञ्च्यृतश्च[10] ।
२५ तृषिमृषिकृशेः[11] काश्यपस्य ।
२६ रलो[12] व्युपधाद्धलादेः संश्च ।
२७ ऊ[13]कालोऽज्झ्रस्वदीर्घप्लुतः ।
२८ अचश्च[14] ।
२९ उच्चैरुदात्तः[15] ।

(१) यमः सिच् कित्स्यात्सूचने । (२) यमः सिच् किद्वा स्याद्विवाहे । (३) अनयोरिदादेशः स्यात्सिच्च कित्स्यात्तङि । (४) सेट् क्त्वा किन्न स्यात् । (५) एभ्यः सेण्निष्ठा किन्न स्यात् । (६) सेण्निष्ठा किन्न स्यात् । (७) उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात् । (८) पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् । पवितः । (९) सेट् क्त्वा कित्स्याद्वा । श्रथित्वा । श्रन्थित्वा । (१०) सेट् क्त्वा किद्वा । वचित्वा । वञ्चित्वा । (११) एभ्यः सेट् क्त्वा किद्वा । तृषित्वा । तर्षित्वा । (१२) उश्च इश्च वी, ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । दिद्युतिषते । दिद्योतिषते । (१३) उश्च ऊश्च ऊ३श्च वः, वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । (१४) ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राऽच इति षष्ठ्यन्तं पदमुपतिष्ठते । (१५) ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ।

३० नीचैर[1]नुदात्तः ।

३१ समा[2]हारः स्वरितः ।

३२ तस्या[3]दित उदात्तमर्धह्रस्वम् ।

३३ एक[4]श्रुति रात्सम्बुद्धौ ।

३४ यज्ञ[5]कर्मण्यजपन्यूङ्खसामसु ।

३५ उच्चैस्त[6]रां वा वषट्कारः ।

३६ विभाषा[7] छन्दसि ।

३७ न सुब्र[8]ह्मण्यायां स्वरितस्य तूदात्तः ।

३८ देवब्र[9]ह्मणोरनुदात्तः ।

३९ स्वरितात्[10]संहितायामनुदात्तानाम् ।

४० उदात्त[11]स्वरितपरस्य सन्नतरः ।

४१ अपृक्त[12] एकाल्प्रत्ययः ।

(१) ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसञ्ज्ञः स्यात् । (२) उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात् । (३) ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । (४) दूरात्संबोधने वाक्यमेकश्रुति स्यात् । आगच्छ भो माणवक । (५) यज्ञक्रियायां मन्त्रे एकश्रुतिः स्याज्जपादीन्वर्जयित्वा । अग्निर्मूर्धा दिवः ककुत् । (६) यज्ञकर्मणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा । (७) छन्दसि विभाषा एकश्रुतिः स्यात् ।

(८) सुब्रह्मण्याख्ये निगदे 'यज्ञकर्मणी'ति 'विभाषा छन्दसी'ति च प्राप्ता एकश्रुतिर्वा स्यात्स्वरितस्योदात्तश्च स्यात् । सुब्रह्मण्यो३म् । (९) अनयोः स्वरितस्यानुदात्तः स्यात्सुब्रह्मण्यायाम् । देवा ब्रह्माण आगच्छत । (१०) स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति । (११) उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्तस्यानुदात्ततरः स्यात् । सरस्वति शुतुद्रि । (१२) एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।

४२ तत्पुरुषः[1] समानाधिकरणः कर्मधारयः।

४३ प्रथमानिर्दिष्टं[2] समास उपसर्जनम्।

४४ एकविभक्ति[3] चापूर्वनिपाते।

४५ अर्थवदधातुरप्रत्ययः[4] प्रातिपदिकम्।

४६ कृत्तद्धितसमासाश्च[5]।

४७ ह्रस्वो[6] नपुंसके प्रातिपदिकस्य।

४८ गोस्त्रियोरुपसर्जनस्य[7]।

४९ लुक्तद्धितलुकि[8]।

५० इद्गोण्याः[9]।

५१ लुपि युक्तवद्व्यक्तिवचने[10]।

५२ विशेषणानां[11] चाजातेः।

५३ तदशिष्यं[12] संज्ञाप्रमाणत्वात्।

५४ लुब्योगाऽप्रख्यानात्[13]।

(१) समानाधिकरणपदकस्तत्पुरुषः कर्मधारयसञ्ज्ञो भवति। (२) समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्। (३) विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात् न तु तस्य पूर्वं निपातः। (४) धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्। (५) कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः। (६) क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः स्यात्। (७) उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। (८) तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात्। श्रविष्ठासु जातः श्रविष्ठः। (९) गोण्या इत्स्यात्तद्धितलुकि। पञ्चगोणिः। (१०) लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। (११) लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। (१२) युक्तवद्वचनं न कर्तव्यं संज्ञानां प्रमाणत्वात्। (१३) लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः।

५५ योग[1]प्रमाणे च तदभावेऽदर्शनं स्यात् ।

५६ प्रधान[2]प्रत्ययार्थवचनमर्थस्याऽन्यप्रमाणत्वात् ।

५७ का[3]लोपसर्जने च तुल्यम् ।

५८ जात्या[4]ख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ।

५९ अस्म[5]दो द्वयोश्च ।

६० फल्गु[6]नीप्रोष्ठपदानां च नक्षत्रे ।

६१ छन्द[7]सि पुनर्वस्वोरेकवचनम् ।

६२ विशा[8]खयोश्च ।

६३ तिष्य[9]पुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।

६४ सरूपा[10]णामेकशेष एकविभक्तौ ।

६५ वृद्धो यूना[11] तल्लक्षणश्चेदेव विशेषः ।

---

(१) यदि हि योगस्याऽवयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत । (२)'प्रत्ययार्थः प्रधान'मित्येवंरूपं वचनमप्यशिष्यम्, अर्थस्य लोकतः सिद्धेः । (३) 'अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः' 'विशेषणमुपसर्जन'मित्यादिवचनमप्यशिष्यं, लोकप्रसिद्धेः। (४)एकोऽप्यर्थो वा बहुत्ववद्भवति । ब्राह्मणाः पूज्याः, ब्राह्मणः पूज्यः । (५) एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । अहं ब्रवीमि ।

(६) द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात्। पूर्वे फल्गुन्यौ, पूर्वाः फल्गुन्यः। (७) द्वयोरेकवचनं वा स्यात् । पुनर्वसु नक्षत्रं, पुनर्वसू वा । (८) द्वयोरेकवचनं वा स्यात् । (९) बहुत्वं द्वित्वद्भवति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । (१०) एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते । (११) यूना सहोक्तौ गोत्रं शिष्यते, गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यौ ।

६६ स्त्री पुंवच्च[1] ।

६७ पुमान् स्त्रिया[2] ।

६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम्[3] ।

६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्[4] ।

७० पिता मात्रा[5] ।

७१ श्वशुरः श्वश्र्वा[6] ।

७२ त्यदादीनि सर्वैर्नित्यम्[7] ।

७३ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री[8] ॥

(गाङ्कुटाद्युदुपधादपृक्तश्छन्दसि पुनर्वस्वोस्त्रयोदश ॥)

## तृतीयः पादः ।

१ भूवादयो धातवः[9] ।

२ उपदेशेऽजनुनासिक इत्[10] ।

३ हलन्त्यम्[11] ।

४ न विभक्तौ तुस्माः[12] ।

५ आदिर्ञिटुडवः[13] ।

(१) यूना सहोक्तौ वृद्धा स्त्री शिष्यते, तदर्थश्च पुंवत् । गर्गाः । (२) स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसौ । (३) स्वसृदुहितृभ्यां सहोक्तौ भ्रातृपुत्रौ शिष्येते । (४) अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । तदिदं शुक्लम् , तानीमानि शुक्लानि । (५) मात्रा सहोक्तौ पिता वा शिष्यते । पितरौ । मातापितरौ । (६) श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् । श्वशुरौ । (७) सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । तौ । (८) एषु सहविवक्षायां स्त्री शिष्यते । गाव इमाः । इति द्वितीयः पादः ।

(९) क्रियावाचिनो–भ्वादयो धातुसञ्ज्ञकाः स्युः। (१०) उपदेशेऽनुनासिकोऽजित्सञ्ज्ञः स्यात् । (११) उपदेशेऽन्त्यं हलित्स्यात् । (१२) विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। (१३) उपदेशे धातोराद्या एते इतः स्युः ।

६ षः प्रत्ययस्य ।
७ चुटू ।
८ लशक्वतद्धिते ।
९ तस्य लोपः ।
१० यथासंख्यमनुदेशः समानाम् ।
११ स्वरितेनाधिकारः ।
१२ अनुदात्तङित आत्मनेपदम् ।
१३ भावकर्मणोः ।
१४ कर्तरि कर्मव्यतिहारे ।
१५ न गतिहिंसार्थेभ्यः ।
१६ इतरेतरान्योन्योपपदाच्च ।
१७ नेर्विशः ।
१८ परिव्यवेभ्यः क्रियः ।
१९ विपराभ्यां जेः ।
२० आङो दोऽनास्यविहरणे ।
२१ क्रीडोऽनुसंपरिभ्यश्च ।
२२ समवप्रविभ्यः स्थः ।

(१) प्रत्ययादिः ष इत् स्यात् । (२) प्रत्ययाद्यौ चुटू इतौ स्तः । (३) तद्धितवर्जप्रत्ययाद्याः लशकवर्गा इतः स्युः । (४) तस्य=इतो लोपः स्यात् । (५) समसम्बन्धी विधिर्यथासंख्यं स्यात् । (६) स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् । (७) अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् । (८) भावकर्मणोरात्मनेपदं स्यात् । (९) क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् ।

(१०) गतिहिंसार्थेभ्यः क्रियाविनिमये द्योत्येऽप्यात्मनेपदं न स्यात् । (११) इतरेतरान्योन्योपपदाद्धातोः कर्मव्यतिहारेऽपि कर्त्तरि आत्मनेपदं न स्यात् । (१२) नेः परस्य विश आत्मनेपदं स्यात् । (१३) परिव्यवेभ्यः परस्य क्रिय आत्मनेपदं स्यात् । अकर्त्रभिप्रायार्थमिदम् । (१४) विपराभ्यां जयतेरात्मनेपदं स्यात् (१५) आङ्पूर्वात् ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् । (१६) एभ्यः परस्य क्रीडतेरात्मनेपदं स्यात्, चादाङः । (१७) समवप्रविभ्यः परस्य तिष्ठतेरात्मनेपदं स्यात् ।

२३ प्रकाशनस्थेयाख्ययोश्च[1] ।

२४ उदोऽनूर्ध्वकर्मणि[2] ।

२५ उपान्मन्त्रकरणे[3] ।

२६ अकर्मकाच्च[4] ।

२७ उद्विभ्यां तपः[5] ।

२८ आङो यमहनः[6] ।

२९ समो गम्यृच्छिभ्याम्[7] ।

३० निसमुपविभ्यो ह्वः[8] ।

३१ स्पर्धायामाङः[9] ।

३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः[10] ।

३३ अधेः प्रसहने[11] ।

३४ वेः शब्दकर्मणः[12] ।

३५ अकर्मकाच्च[13] ।

३६ संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः[14] ।

(१) प्रकाशने स्थेयाख्यायाञ्च तिष्ठतेरात्मनेपदं स्यात् । (२) उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्त्तमानादात्मनेपदं स्यात् । (३) उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्त्तमानादात्मनेपदं स्यात् । (४) उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । (५) उद्विभ्यां परस्य तपतेरकर्मकादात्मनेपदं स्यात् । (६) आङः परयोरनयोरकर्मकक्रियावचनयोरात्मनेपदं स्यात् ।(७) सम्पूर्वयोरनयोरात्मनेपदं स्यात् । (८) एभ्यः परस्य ह्वयतेरात्मनेपदं स्यात् ।

(९) आङ्पूर्वात् ह्वयतेरात्मनेपदं स्यात्स्पर्द्धायाम् । (१०) गन्धनादिष्वर्थेषु करोतेरात्मनेपदं स्यात् । (११) अधिपूर्वात्करोतेः प्रहसने वर्त्तमानादात्मनेपदम् । (१२) विपूर्वात्करोतेः शब्दकर्मण आत्मनेपदं स्यादकर्त्रभिप्रायेऽपि क्रियाफले । (१३) विपूर्वात्करोतेरकर्मकादात्मनेपदं स्यात् । (१४) उत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः, इतरे प्रयोगोपाधयः । निय आत्मनेपदं

३७ कर्तृस्थे[1] चाशरीरे कर्मणि ।
३८ वृत्तिसर्गतायनेषु क्रमः[2] ।
३९ उपपराभ्याम्[3] ।
४० आङ[4] उद्गमने ।
४१ वेः पादविहरणे[5] ।
४२ प्रोपाभ्यां[6] समर्थाभ्याम् ।
४३ अनुपसर्गाद्वा[7] ।
४४ अपह्नवे[8] ज्ञः ।
४५ अकर्मकाच्च[9] ।
४६ संप्रतिभ्यामनाध्याने[10] ।
४७ भासनोपसंभाषाज्ञानयत्न-
विमत्युपमन्त्रणेषु वदः[11] ।
४८ व्यक्तवाचां[12] समुच्चारणे ।
४९ अनोरकर्मकात्[13] ।
५० विभाषा[14] विप्रलापे ।
५१ अवाद्ग्रः[15] ।
५२ समः[16] प्रतिज्ञाने ।

स्यादिष्वर्थेषु । (१) नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् । (२) क्रमेरात्मनेपदं स्याद्वृत्त्यादिष्वर्थेषु । (३) वृत्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् । (४) आङ्पूर्वात् क्रमतेरुद्गमने वर्तमानादात्मनेपदं स्यात । (५) विपूर्वात्क्रमतेः पादविहरणेऽर्थे वर्तमानादात्मनेपदम् । (६) प्र उप एत्येताभ्यां परस्मात्क्रमतेरात्मनेपदम् । (७) उपसर्गवियुक्तात्क्रमतेरात्मनेपदं वा स्यात् । (८) जानातेरपह्नवे वर्तमानादात्मनेपदम्

(९) जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं स्यात् । (१०) सं प्रतीत्येवं पूर्वाज्जानातेरनाध्याने वर्तमानादात्मनेपदम् । (११) उपसंभाषोपमन्त्रणे धातोर्वाच्ये । एष्वर्थेषु वदेरात्मनेपदं स्यात् । (१२) मनुष्याणां सम्भूयोच्चारणे वदेरात्मनेपदं स्यात् । (१३) व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् । (१४) विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । (१५) अवपूर्वाद्गिरतेरात्मनेपदं स्यात् । (१६) संपूर्वाद्गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदम् ।

५३ उदश्चरः सकर्मकात् ।[1]
५४ समस्तृतीयायुक्तात् ।[2]
५५ दाणश्च सा चेच्चतुर्थ्यर्थे ।[3]
५६ उपाद्यमः स्वकरणे ।[4]
५७ ज्ञाश्रुस्मृदृशां सनः ।[5]
५८ नानोर्ज्ञः ।[6]
५९ प्रत्याङ्भ्यां श्रुवः ।[7]
६० शदेः शितः ।[8]
६१ म्रियतेर्लुङ्लिङोश्च ।[9]
६२ पूर्ववत्सनः ।[10]
६३ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।[11]
६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ।[12]
६५ समः क्ष्णुवः ।[13]
६६ भुजोऽनवने ।[14]
६७ णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ।[15]

(१) उत्पूर्वाच्चरतेः सकर्मकक्रियावचनादात्मनेपदम् । (२) संपूर्वाच्चरतेस्तृतीयान्तेन युक्तादात्मनेपदम् । (३) संपूर्वाद्दाणस्तृतीयान्तेन युक्तादात्मनेपदं स्यात् तृतीया चेच्चतुर्थ्यर्थे । (४) उपपूर्वाद्यमः स्वकरणे वर्तमानादात्मनेपदं स्यात् । (५) सन्नन्तानामेषां प्राग्वत् । (६) अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात् । (७) आभ्यां सन्नन्तात् श्रुव आत्मनेपदं न स्यात् । (८) शिद्भाविनोऽस्मादात्मनेपदं स्यात् । (९) लुङ्लिङोःशितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । (१०) सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादात्मनेपदं स्यात् । (११) आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदम् । (१२) प्र उप इत्येवंपूर्वाद्युज्यतेरयज्ञपात्रप्रयोगविषयादात्मनेपदं स्यात् । (१३) संपूर्वात्क्ष्णुवादात्मनेपदं स्यात् । (१४) अनवने=अपालने वर्तमानाद्भुज आत्मनेपदं स्यात् । (१५) ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव ण्यन्तेनोच्यते, अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यान्नत्वनाध्याने ।

६८ भीस्म्योर्हेतुभये[1]।
६९ गृधिवञ्च्योः प्रलम्भने[2]।
७० लियः संमाननशालीनीकरणयोश्च[3]।
७१ मिथ्योपपदात्कृञोऽभ्यासे[4]।
७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले[5]।
७३ अपाद्वदः[6]।
७४ णिचश्च[7]।
७५ समुदाङ्भ्यो यमोऽग्रन्थे[8]।
७६ अनुपसर्गाज्ज्ञः[9]।
७७ विभाषोपपदेन प्रतीयमाने[10]।
७८ शेषात् कर्तरि परस्मैपदम्[11]।
७९ अनुपराभ्यां कृञः[12]।
८० अभिप्रत्यतिभ्यः क्षिपः[13]।४।

(१) बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतोश्चेद्भयस्मयौ। (२) प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यामात्मनेपदम्। (३) लियो ण्यन्तात्संमाननेशालीनीकरणे प्रलम्भने च वर्तमानादात्मनेपदम्। (४) मिथ्योपपदाण्ण्यन्तात्करोतेरात्मनेपदं स्यादभ्यासे। (५) स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। (६) अपपूर्वाद्वदतेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं स्यात्। (७) णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। (८) सम् उद् आङ् इत्येव पूर्वाद्यमेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं स्यात्। (९) अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं स्यात्। (१०) स्वरितञित इत्यादि पञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। (११) आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्। (१२) अनु परा इत्येवंपूर्वात्करोतेः परस्मैपदं स्यात्। (१३) अभि प्रति अति इत्येवंपूर्वात्क्षिपः परस्मैपदं स्यात्।

८१ प्राद्वहः[१] ।

८२ परेर्मृषः[२] ।

८३ व्याङ्परिभ्यो रमः[३] ।

८४ उपाच्च[४] ।

८५ विभाषाऽकर्मकात्[५] ।

८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो[६] णेः ।

८७ निगरणचलनार्थेभ्यश्च[७] ।

८८ अणावकर्मकाच्चित्तवत्कर्तृकात्[८] ।

८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः[९] ।

९० वा क्यषः[१०] ।

९१ द्युद्भ्यो लुङि[११] ।

९२ वृद्भ्यः स्यसनोः[१२] ।

९३ लुटि च क्लृपः[१३] ।

[ भूवादयःक्रीडोऽनु वेः पादम्रियतेः प्राद्वहस्त्रयोदश ]

इति प्रथमाध्यायस्य तृतीयः पादः ।

---

(१) प्रपूर्वाद्वहतेः परस्मैपदं स्यात् । (२) परिपूर्वान्मृष्यतेः परस्मैपदं स्यात् । (३) वि-आङ् परि इत्येवंपूर्वाद्रमतेः परस्मैपदम् । (४) उपपूर्वाद्रमतेः परस्मैपदं स्यात् । (५) उपाद्रमेरकर्मकात् परस्मैपदं वा । (६) एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । (७) निगरणार्थेभ्यश्चलनार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदम् । (८) अणावकर्मकाच्चित्तवत्कर्तृकाण्ण्यन्तात्परस्मैपदं स्यात् । (९) एभ्यो ण्यन्तेभ्यः परस्मैपदं न । (१०) क्यषन्ताद्धातोर्वा परस्मैपदम् । (११) द्युतादिभ्यो लुङः परस्मैपदं वा । (१२) वृतादिभ्यः परस्मैपदं वा स्यात् स्ये सनि च । (१३) लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात् ।

*इति प्रथमाऽध्यायस्य तृतीयः पादः*

## चतुर्थः पादः ।

१ आ कडारादेका संज्ञा ।
२ विप्रतिषेधे परं कार्यम् ।
३ यू स्त्र्याख्यौ नदी ।
४ नेयङुवङ्स्थानावस्त्री ।
५ वामि ।
६ ङिति ह्रस्वश्च ।
७ शेषो घ्यसखि ।
८ पतिः समास एव ।
९ षष्ठीयुक्तश्छन्दसि वा ।
१० ह्रस्वं लघु ।
११ संयोगे गुरु ।
१२ दीर्घं च ।
१३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।
१४ सुप्तिङन्तं पदम् ।

(१) इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव सञ्ज्ञा ज्ञेया । (२) तुल्यबलविरोधे परं कार्यं स्यात् । मनोरथः । (३) ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसञ्ज्ञौ स्तः । (४) इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसञ्ज्ञौ न स्तो न तु स्त्री । (५) इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो नतु स्त्री । (६) इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे । (७) अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । (८) पतिशब्दः समास एव घिसंज्ञः स्यात् । (९) षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसंज्ञो वा स्यात् । (१०) ह्रस्वमक्षरं लघुसञ्ज्ञं स्यात् । (११) संयोगे परे ह्रस्वं गुरु स्यात् । (१२) दीर्घञ्च गुरुसञ्ज्ञं स्यात् । (१३) यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसञ्ज्ञं स्यात् । (१४) सुबन्तं तिङन्तञ्च पदसञ्ज्ञं स्यात् ।

१५ नः क्ये[1] ।
१६ सिति च[2] ।
१७ स्वादिष्वसर्वनाम[3]स्थाने ।
१८ यचि भम्[4] ।
१९ तसौ मत्वर्थे[5] ।
२० अयस्मयादीनि छन्दसि[6] ।१।
२१ बहुषु बहुवचनम्[7] ।
२२ द्व्येकयोर्द्विवचनैकवचने[8] ।
२३ कारके[9] ।
२४ ध्रुवमपायेऽपादानम्[10] ।
२५ भीत्रार्थानां भयहेतुः[11] ।
२६ पराजेरसोढः[12] ।
२७ वारणार्थानामीप्सितः[13] ।
२८ अन्तर्धौ येनादर्शनमिच्छति[14]

(१) क्यचि क्यङि च नान्तमेव पदं नान्यत् । राजीयति । (२) सिति परे पूर्वं पदसञ्ज्ञं स्यात् । पार्श्वम् । (३) कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसञ्ज्ञं स्यात् । (४) यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसञ्ज्ञं स्यात् । (५) तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थीये प्रत्यये परे । विदुष्मान् । ( ६ ) एतानि छन्दसि साधूनि । भपदसंज्ञाधिकाराद्यथायोग्यं संज्ञाद्वयं बोध्यम् । (७) बहुत्वे एतत् स्यात् । (८) द्वित्वैकत्वयोरेते स्तः ।

(९) इत्यधिकृत्य । (१०) अपायो विश्लेषस्तस्मिन् साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् । (११) भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चोराद्बिभेति । (१२) पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । (१३) प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । (१४) व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः ।

२९ आख्यातोपयोगे[1]।

३० जनिकर्तुः प्रकृतिः[2]।

३१ भुवः प्रभवः[3]।

३२ कर्मणा यमभिप्रैति[4] स सम्प्रदानम्।

३३ रुच्यर्थानां प्रीयमाणः[5]।

३४ श्लाघह्नुङ्स्थाशपां[6] ज्ञीप्स्यमानः।

३५ धारेरुत्तमर्णः[7]।

३६ स्पृहेरीप्सितः[8]।

३७ क्रुधद्रुहेर्ष्याऽसूयार्थानां[9] यं प्रति कोपः।

३८ क्रुधद्रुहोरुपसृष्टयोः[10] कर्म।

३९ राधीक्ष्योर्यस्य[11] विप्रश्नः।

४० प्रत्याङ्भ्यां श्रुवः[12] पूर्वस्य कर्ता॥ २॥

(१) नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् । उपाध्यायादधीते । (२) जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । (३) भवनं भूः । भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति । (४) दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् । विप्राय गां ददाति । (५) रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात् । हरये रोचते भक्तिः । (६) एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते ।

(७) धारयतेः प्रयोगे उत्तमर्णः सम्प्रदानं स्यात् । भक्ताय धारयते मोक्षं हरिः । (८) स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । (९) क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स सम्प्रदानसंज्ञः स्यात् । हरये क्रुध्यति । (१०) सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति । (११) एतयोः कारकं सम्प्रदानं स्यात् । कृष्णाय राध्यति ईक्षते वा । (१२) आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता सम्प्रदानं स्यात् । विप्राय गां प्रतिशृणोति ।

४१ अनुप्रतिगृणश्च ।
४२ साधकतमं करणम् ।
४३ दिवः कर्म च ।
४४ परिक्रयणे सम्प्रदान-
मन्यतरस्याम् ।
४५ आधारोऽधिकरणम् ।
४६ अधिशीङ्स्थासां कर्म ।
४७ अभिनिविशश्च ।
४८ उपान्वध्याङ्वसः ।
४९ कर्तुरीप्सिततमं कर्म ।
५० तथायुक्तं चानीप्सितम् ।
५१ अकथितं च ।
५२ गतिबुद्धिप्रत्यवसानार्थ-
शब्दकर्माकर्मकाणामणि
कर्ता स णौ ।
५३ हृक्रोरन्यतरस्याम् ।

(१) आभ्यां गृणातेः कारकं पूर्व-व्यापारस्य कर्तृभूतं सम्प्रदानसंज्ञं स्यात् । होत्रेऽनुगृणाति । (२) क्रियासिद्धौ प्रकृष्टोपकारकं करणसञ्ज्ञं स्यात् । (३) दिवः साधकतमं कारकं कर्म-संज्ञं स्याच्चात्करणसञ्ज्ञम् । अक्षैरक्षा-न्वा दीव्यति । (४) नियतकालं भृत्या स्वीकरणं परिक्रयणं, तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात् । शतेन शताय वा परिक्रीतः । (५) कर्तृकर्म-द्वारा तन्निष्ठक्रियाया आधारः कारक-मधिकरणसञ्ज्ञं स्यात् । कटे आस्ते । (६) अधिपूर्वाणामेषामाधारः कर्म स्यात् । (७) अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । (८) उपा-दिपूर्वस्य वसतेराधारः कर्म स्यात् । (९) कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसञ्ज्ञं स्यात् । (१०) ईप्सित-तमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात् । (११) अपा-दानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । (१२) गत्याद्यर्थानां शब्दकर्म-णामकर्मकाणां चाणौ यः कर्त्ता स णौ कर्म स्यात् । (१३) हृक्रोरणौ यः कर्त्ता

५४ स्वतन्त्रः[1] कर्ता ।

५५ तत्प्रयोजको[2] हेतुश्च ।

५६ प्राग्रीश्वरान्निपाताः[3] ।

५७ चादयोऽसत्त्वे[4] ।

५८ प्रादयः[5] ।

५९ उपसर्गाः क्रियायोगे[6] ।

६० गतिश्च[7] ॥ ३ ॥

६१ ऊर्यादिच्विडाचश्च ।

६२ अनुकरणं चा[9]नितिपरम् ।

६३ आदरानादरयोः सदसती[10] ।

६४ भूषणेऽलम्[11] ।

६५ अन्तरपरिग्रहे[12] ।

६६ कणेमनसी[13] श्रद्धाप्रतीघाते ।

६७ पुरोऽव्ययम्[14] ।

६८ अस्तं च[15] ।

६९ अच्छ गत्यर्थवदेषु[16] ।

७० अदोऽनुपदेशे[17] ।

७१ तिरोऽन्तर्धौ[18] ।

---

स णौ वा कर्म स्यात् । (१) क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । (२) कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् । (३) अधिकारोऽयम् । (४) अद्रव्यार्थाश्चादयो निपातसञ्ज्ञाः स्युः । (५) अद्रव्यार्थाः प्रादयो निपातसञ्ज्ञाः स्युः । (६) प्रादयः क्रियायोगे उपसर्गसञ्ज्ञाः स्युः । (७) प्रादयः क्रियायोगे गतिसञ्ज्ञाश्च स्युः । (८) एते क्रियायोगे गतिसञ्ज्ञाः स्युः । (९) अनितिपरमनुकरणं क्रियायोगे गतिसञ्ज्ञम् । (१०) एतयोरेतौ गतिसञ्ज्ञौ स्तः । (११) भूषणेऽलंशब्दो गतिसञ्ज्ञः स्यात् । (१२) अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसञ्ज्ञः । (१३) एतौ श्रद्धाप्रतीघाते गतिसञ्ज्ञौ । (१४) पुरःशब्दोऽव्ययं गतिसञ्ज्ञः स्यात् । (१५) अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् । (१६) अच्छेत्यव्ययं गत्यर्थवदेषु गतिसञ्ज्ञम् । (१७) अदोऽनुपदेशे गतिसञ्ज्ञः । (१८) तिरोऽन्तर्द्धौ गति-

७२ विभाषा[1] कृञि ।
७३ उपाजेऽन्वाजे[2] ।
७४ साक्षात्[3]प्रभृतीनि च ।
७५ अनत्[4]याधान उरसिमनसी ।
७६ मध्ये[5]पदेनिवचने च ।
७७ नित्यं हस्ते[6] पाणावुपयमने ।
७८ प्राध्वं[7] बन्धने ।
७९ जीविकोपनिषदा[8]वौपम्ये ।
८० ते प्राग्धातोः[9] ॥ ४ ॥
८१ छन्दसि[10] परेऽपि ।
८२ व्यवहिताश्च[11] ।
८३ कर्मप्रवचनीयाः[12] ।
८४ अनु[13]र्लक्षणे ।
८५ तृतीयार्थे[14] ।
८६ हीने[15] ।
८७ उपोऽधिके च[16] ।
८८ अपपरी वर्जने[17] ।
८९ आङ्मर्यादावचने[18] ।

सञ्ज्ञः । (१) तिरःशब्दः कृञि वा गतिसञ्ज्ञः । (२) एतौ कृञि वा गतिसञ्ज्ञौ स्तः । (३) कृञि वा गतिसञ्ज्ञानि स्युः । (४) अनत्याधाने एतौ वा गातिसञ्ज्ञौ स्तः कृञि । (५) एते कृञि वा गतिसञ्ज्ञाः स्युरनत्याधाने । (६) एतौ विवाहे नित्यं गतिसञ्ज्ञौ स्तः कृञि । (७) प्राध्वमित्यव्ययं बन्धने गतिसञ्ज्ञं स्यात् । (८) एतावौपम्ये कृञि गतिसञ्ज्ञौ । (९) ते गत्युपसर्गसञ्ज्ञा धातोः प्रागेव प्रयोक्तव्याः । (१०) छन्दसि गत्युपसर्गसञ्ज्ञाः परेऽपि प्रयोक्तव्याः । (११) छन्दसि गत्युपसर्गसञ्ज्ञा व्यवहिता अपि प्रयोक्तव्याः । (१२) अधिकारोऽयम् । (१३) लक्षणे द्योत्येऽनुरुक्तसञ्ज्ञः स्यात् । (१४) अस्मिन् द्योत्येऽनुरुक्तसञ्ज्ञः स्यात् । (१५) हीने द्योत्येऽनुः प्राग्वत् । (१६) अधिके हीने च द्योत्य उपेत्यव्ययं प्राक्सञ्ज्ञं स्यात् । (१७) एतौ वर्जने कर्मप्रवचनीयौ स्तः । (१८) आङ् मर्यादायामुक्तसञ्ज्ञः स्यात् ।

९० लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः[1] ।
९१ अभिरभागे[2] ।
९२ प्रतिः प्रतिनिधिप्रतिदानयोः[3] ।
९३ अधिपरी अनर्थकौ[4] ।
९४ सुः पूजायाम्[5] ।
९५ अतिरतिक्रमणे च[6] ।
९६ अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु[7] ।
९७ अधिरीश्वरे[8] ।
९८ विभाषा कृञि[9] ।
९९ लः[10] परस्मैपदम् ।
१०० तङानावात्मनेपदम्[11] ॥ ५ ॥
१०१ तिङस्त्रीणि त्रीणि[12] प्रथममध्यमोत्तमाः ।
१०२ तान्येकवचनद्विवचनबहुवचनान्येकशः[13] ।
१०३ सुपः[14] ।

(१) एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसञ्ज्ञाः स्युः । (२) भागवर्जे लक्षणादावभिरुक्तसञ्ज्ञः स्यात् । (३) एतयोरर्थयोः प्रतिरुक्तसञ्ज्ञः स्यात् । (४) उक्तसञ्ज्ञौ स्तः । (५) सुः पूजायामुक्तसञ्ज्ञः । (६) अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसञ्ज्ञः स्यात् । (७) एषु द्योत्येष्वपिरुक्तसञ्ज्ञः स्यात् । (८) स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयसञ्ज्ञः स्यात् । (९) अधिः करोतौ प्राक्सञ्ज्ञो वा स्यादीश्वरेऽर्थे । (१०) लादेशाः परस्मैपदसञ्ज्ञाः स्युः । (११) तङ् प्रत्याहारः शानच्कानचौ चैतत्सञ्ज्ञाः स्युः । (१२) तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्सञ्ज्ञाः स्युः । (१३) लब्धप्रथमादिसञ्ज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसञ्ज्ञानि स्युः । (१४) सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसञ्ज्ञानि स्युः ।

१०४ विभक्तिश्चं ।

१०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।

१०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।

१०७ अस्मद्युत्तमः ।

१०८ शेषे प्रथमः ।

१०९ परः संनिकर्षः संहिता ।

११० विरामोऽवसानम् ।

[ आकडाराद्वहुष्वनुप्रातिगृणऊर्यादिच्छन्दसि तिङो दश ]

इति प्रथमाध्यायस्य चतुर्थः पादः ।

इति प्रथमोऽध्यायः ॥

(१) सुप्तिङौ विभक्तिसञ्ज्ञौ स्तः । (२) तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् । (३) मन्यधातुरुपपदं यस्य धातोस्तस्मिन् प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् । (४) तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च उत्तमः स्यात्। (५) मध्यमोत्तमयोरविषये प्रथमः स्यात् । (६) वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । (७) वर्णानामभावोऽवसानसञ्ज्ञः स्यात् ॥

इति सरलायां प्रथमाध्यायस्य चतुर्थः पादः ॥

# अथ द्वितीयोऽध्यायः ।

## प्रथमः पादः

१ समर्थः पदविधिः ।
२ सुबामन्त्रिते पराङ्गवत्स्वरे ।
३ प्राक्कडारात्समासः ।
४ सह सुपा ।
५ अव्ययीभावः ।
६ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ।
७ यथाऽसादृश्ये ।
८ यावदवधारणे ।
९ सुप्प्रतिना मात्रार्थे ।
१० अक्षशलाकासंख्याः परिणा ।
११ विभाषा ।

(१) पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः । (२) सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात्स्वरे कर्तव्ये । (३) 'कडाराः कर्मधारये' इत्यतः प्राक्समास इत्यधिक्रियते । (४) 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । सुपा । सुबन्तं सुबन्तेन सह समस्यते । (५) अधिकारोऽयम् । (६) अव्ययमिति योगो विभज्यते, अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः । विभक्त्यादिषु वर्त्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः । (७) असादृश्ये एव यथाशब्दः समस्यते । (८) अवधारणे वर्त्तमानं यावदित्यव्ययं सुपा सह समस्यते । यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् । (९) मात्रार्थे वर्त्तमानेन प्रतिना सह सुबन्तं समस्यते । (१०) द्यूतव्यवहारे पराजय एवायं समासः । (११) अधिकारोऽयम् ।

१२ अपपरिबहिरञ्चवः पञ्चम्या[1] ।
१३ आङ् मर्यादाभिविध्योः[2] ।
१४ लक्षणेनाभिप्रती आभिमुख्ये[3] ।
१५ अनुर्यत्समया[4] ।
१६ यस्य चायामः[5] ।
१७ तिष्ठद्गुप्रभृतीनि च[6] ।
१८ पारेमध्ये षष्ठ्या वा[7] ।
१९ संख्या वंश्येन[8] ।
२० नदीभिश्च[9] ॥ १ ॥
२१ अन्यपदार्थे च संज्ञायाम्[10] ।
२२ तत्पुरुषः[11] ।
२३ द्विगुश्च[12] ।
२४ द्वितीया[13] श्रिताऽतीतपतित-गताऽत्यस्तप्राप्तापन्नैः ।
२५ स्वयं[14] क्तेन ।
२६ खट्वा[15] क्षेपे ।

(१) एते पञ्चम्यन्तेन सह वा समस्यन्ते । (२) एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः । (३) आभिमुख्यद्योतकावभिप्रती चिह्नवाचिना सह प्राग्वत् । (४) यं पदार्थं समया द्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः । (५) यस्य दैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते । (६) एतानि निपात्यन्ते । (७) पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । (८) वंशो द्विधा विद्यया जन्मना च । तत्र भवो वंश्यः । तद्वाचिना सह संख्या वा समस्यते । (९) नदीभिः सह संख्या प्राग्वत् । (१०) अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् । (११) अधिकारोऽयं प्राग्बहुव्रीहेः । (१२) द्विगुरपि तत्पुरुषसंज्ञः स्यात् । (१३) द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । (१४) स्वयमित्यव्ययं क्तान्तेन समस्यते । (१५) खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन सह नित्यं समस्यते निन्दायाम् ।

२७ सामि[1] ।
२८ कालाः[2] ।
२९ अत्यन्तसंयोगे च[3] ।
३० तृतीया[4] तत्कृतार्थेन गुणवचनेन ।
३१ पूर्वसदृशसमोनार्थकलह-निपुणमिश्रश्लक्ष्णैः[5] ।
३२ कर्तृकरणे[6] कृता बहुलम् ।
३३ कृत्यैरधिकार्थवचने[7] ।
३४ अन्नेन व्यञ्जनम्[8] ।
३५ भक्ष्येण मिश्रीकरणम्[9] ।
३६ चतुर्थी[10] तदर्थार्थबलिहित-सुखरक्षितैः ।
३७ पञ्चमी[11] भयेन ।
३८ अपेतापोढमुक्तपतिता-पत्रस्तैरल्पशः[12] ।
३९ स्तोकान्तिकदूरार्थकृच्छ्राणि[13] क्तेन ।

(१) सामीति सुबन्तं क्तान्तेन सह समस्यते । (२) कालवाचकं द्वितीयान्तं क्तान्तेन सह वा समस्यते । (३) कालवाचकं द्वितीयान्तमत्यन्तसंयोगे गम्ये सुबन्तेन सह वा समस्यते । (४) तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनाऽर्थशब्देन च सह वा प्राग्वत । (५) तृतीयान्तमेतैः प्राग्वत् । (६) कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वद्वा । (७) स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत् । (८) संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह प्राग्वद्वा । (९) मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना वा समस्यते । (१०) चतुर्थ्यन्तार्थाय यत्तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । (११) पञ्चम्यन्तं भयेन सह प्राग्वद्वा । (१२) एतैः सहाऽल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः । (१३) एतानि क्तान्तेन सह वा समस्यन्ते ।

४० सप्तमी शौण्डैः[1] ।
४१ सिद्धशुष्कपक्वबन्धैश्च[2] ।
४२ ध्वाङ्क्षेण क्षेपे[3] ।
४३ कृत्यैर्ऋणे[4]
४४ संज्ञायाम्[5] ।
४५ क्तेनाऽहोरात्रावयवाः[6] ।
४६ तत्र[7] ।
४७ क्षेपे[8] ।
४८ पात्रेसमितादयश्च[9] ।
४९ पूर्वकालैकसर्वजरत्पुराण-नवकेवलाः समानाधिकरणेन[10] ।
५० दिक्संख्ये संज्ञायाम्[11] ।
५१ तद्धितार्थोत्तरपदसमाहारे च[12] ।
५२ संख्यापूर्वो द्विगुः[13] ।
५३ कुत्सितानि कुत्सनैः[14] ।
५४ पापाणके कुत्सितैः[15] ।

(१) सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा । (२) ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम् । (३) एतैः सप्तम्यन्तं प्राग्वत् । (४) सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वद्वाऽऽवश्यके । (५) सप्तम्यन्तं सुपा सह प्राग्वत् सञ्ज्ञायाम् । (६) अहो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् । (७) तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् । (८) सप्तम्यन्तं क्तान्ते न प्राग्वन्निन्दायाम् । (९) एते निपात्यन्ते क्षेपे । (१०) एते समानाधिकरणेन सुबन्तेन सह वा समस्यन्ते । समानाऽधिकरणेनेत्यापादसमाप्तेरधिकारः । (११) दिक्सङ्ख्ये सञ्ज्ञायां सुबन्तेन सह समस्येते । (१२) तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा । (१३) तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात् । (१४) कुत्स्यमानानि कुत्सनैः सह प्राग्वत् । (१५) एतौ कुत्सितवचनैः सह समस्येते ।

५५ उपमानानि सामान्यवचनैः।[1]
५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।[2]
५७ विशेषणं विशेष्येण बहुलम्।[3]
५८ पूर्वाऽपरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च।[4]
५९ श्रेण्यादयः कृतादिभिः।[5]
६० क्तेन नञ्विशिष्टेनानञ्।[6] ३।
६१ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः।[7]
६२ वृन्दारकनागकुञ्जरैः पूज्यमानम्।[8]
६३ कतरकतमौ जातिपरिप्रश्ने।[9]
६४ किं क्षेपे।[10]
६५ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः।[11]
६६ प्रशंसावचनैश्च।[12]
६७ युवा खलतिपलितवलिनजरतीभिः।[13]

(१) उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह वा समस्यन्ते। (२) उपमेयं व्याघ्रादिभिः सह वा प्राग्वत्साधारणधर्मस्याप्रयोगे सति। (३) भेदकं समानाऽधिकरणेन भेद्येन बहुलं प्राग्वत्। (४) एते समानाधिकरणेन सुबन्तेन वा समस्यन्ते। पूर्वनिपातनियमार्थमिदम्। (५) श्रेण्यादयः कृतादिभिः समानाधिकरणैः सुबन्तैः सह वा समस्यन्ते। (६) नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं वा समस्यते। (७) एते पूज्यमानैः सह वा प्राग्वत्। (८) वृन्दारकादिभिः सह पूज्यमानवाचकं सुबन्तं वा प्राग्वत्। (९) एतौ जातिपरिप्रश्ने सुपा सह वा प्राग्वत्। (१०) किमित्येतत् सुपा सह समस्यते क्षेपे। (११) एतैः जातिवाचकं सुबन्तं वा प्राग्वत्। (१२) एतैः सह जातिः प्राग्वद्वा। (१३) एतैः सह युवशब्दः प्राग्वद्वा। पूर्वनिपातनियमार्थं सूत्रम्

६८ कृत्यतुल्याख्या अजात्या ।
६९ वर्णो वर्णेन ।
७० कुमारः श्रमणादिभिः ।
७१ चतुष्पादो गर्भिण्या ।
७२ मयूरव्यंसकादयश्च ।
[ समर्थोऽन्यपदार्थे च सिद्धशुष्कसम्महद्दूद्धादश ॥ ]

* इति द्वितीयाध्यायस्य प्रथमः पादः *

## अथ द्वितीयः पादः

१ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।
२ अर्धं नपुंसकम् ।
३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।
४ प्राप्तापन्ने च द्वितीयया ।
५ कालाः परिमाणिना ।
६ नञ् ।

---

(१) एते अजात्या सह प्राग्वत् । (२) वर्णो वर्णेन समानाऽधिकरणेन सह प्राग्वत् । (३) कुमारः श्रमणादिभिः प्राग्वद्वा । (४) चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत् ।

(५) एते निपात्यन्ते ।

इति द्वितीयाध्यायस्य प्रथमः पादः ।

(६) अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । (७) समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् । (८) एतान्येकदेशिना सह प्राग्वत् । (९) एतौ द्वितीयया सह वा प्राग्वत् । (१०) परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । (११) नञ् सुपा सह वा समस्यते ।

७ ईषदकृता ।
८ षष्ठी ।
९ याजकादिभिश्च ।
१० न निर्धारणे ।
११ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।
१२ क्तेन च पूजायाम् ।
१३ अधिकरणवाचिना च ।
१४ कर्मणि च ।
१५ तृजकाभ्यां कर्तरि ।
१६ कर्तरि च ।
१७ नित्यं क्रीडाजीविकयोः ।
१८ कुगतिप्रादयः ।
१९ उपपदमतिङ् ।
२० अमैवाऽव्ययेन ॥ १ ॥
२१ तृतीयाप्रभृतीन्यन्यतरस्याम् ।
२२ क्त्वा च ।
२३ शेषो बहुव्रीहिः ।

(१) ईषदित्यव्ययमकृदन्तेन सुबन्तेन समस्यते । (२) षष्ठ्यन्तं सुबन्तं सुबन्तेन सह समस्यते । (३) एभिः षष्ठ्यन्तं समस्यन्ते । (४) निर्धारणे या षष्ठी सा न समस्यन्ते । (५) पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । (६) 'मतिबुद्धी'ति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । (७) अधिकरणवाचिना क्तेन षष्ठी न समस्यते । (८) 'उभयप्राप्तौ कर्मणी'ति या षष्ठी सा न समस्यते । (९) कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । (१०) कर्तरि षष्ठ्या अकेन न समासः । (११) एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते । (१२) एते समर्थेन नित्यं समस्यन्ते । (१३) उपपदं सुबन्तं समर्थेन नित्यं समस्यते । (१४) अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । (१५) 'उपदंशस्तृतीयाया'मित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते । (१६) तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । (१७) अधिकारोऽयम् ।

२४ अनेकमन्यपदार्थे[1]।

२५ संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये[2]।

२६ दिङ्नामान्यन्तराले[3]।

२७ तत्र तेनेदमिति सरूपे[4]।

२८ तेन सहेति तुल्ययोगे[5]।

२९ चार्थे द्वन्द्वः[6]।

३० उपसर्जनं पूर्वम्[7]।

३१ राजदन्तादिषु परम्[8]।

३२ द्वन्द्वे घि[9]।

३३ अजाद्यदन्तम्[10]।

३४ अल्पाच्तरम्[11]।

३५ सप्तमीविशेषणे बहुव्रीहौ[12]।

३६ निष्ठा[13]।

३७ वाऽऽहिताग्न्यादिषु[14]।

३८ कडाराः कर्मधारये[15]।

[ पूर्वापराधरोत्तरं तृतीयाप्रभृतीन्यष्टादश ]॥

इति द्वितीयाध्यायस्य द्वितीयः पादः।

---

(१) अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्त्तमानं वा समस्यते स बहुव्रीहिः। (२) संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः। (३) दिशो नामान्यन्तराले वाच्ये प्राग्वत्। (४) सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः। (५) तुल्ययोगे वर्त्तमानं सहेत्येतत्तृतीयान्तं प्राग्वत्। (६) अनेकं सुबन्तं चार्थे वर्त्तमानं वा समस्यते स द्वन्द्वः। (७) समासे उपसर्जनं प्राक्प्रयोज्यम्। (८) एषु पूर्वप्रयोगार्हं परं स्यात्। (९) द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। (१०) इदं द्वन्द्वे पूर्वं स्यात्। (११) सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम्। (१३) निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। (१४) एषु निष्ठान्तं वा पूर्वं प्रयोज्यम्। (१५) कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः॥

इति द्वितीयाध्यायस्य द्वितीयः पादः।

## अथ तृतीयः पादः।

१ अनभिहिते।
२ कर्मणि द्वितीया।
३ तृतीया च होश्छन्दसि।
४ अन्तराऽन्तरेण युक्ते।
५ कालाध्वनोरत्यन्तसंयोगे।
६ अपवर्गे तृतीया।
७ सप्तमीपञ्चम्यौ कारकमध्ये।
८ कर्मप्रवचनीययुक्ते द्वितीया।
९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।
१० पञ्चम्यपाङ्परिभिः।
११ प्रतिनिधिप्रतिदाने च यस्मात्
१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि।
१३ चतुर्थी संप्रदाने।
१४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः।
१५ तुमर्थाच्च भाववचनात्।

(१) अधिकाऽयम्। (२) अनुक्ते कर्मणि द्वितीया स्यात्। (३) जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च। (४) आभ्यां योगे द्वितीया स्यात्। (५) इह द्वितीया स्यात्। (६) अपवर्गः=फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। (७) शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यामेते स्तः। (८) एतेन योगे द्वितीया स्यात्। (९) अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात्। (१०) एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। (११) अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। (१२) अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम्। (१३) सम्प्रदाने चतुर्थी स्यात्। (१४) क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्। (१५) 'भाववचनाश्च' इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्।

१६ [1]नमःस्वस्तिस्वाहास्वधालं-
वषड्योगाच्च ।
१७ [2]मन्यकर्मण्यनादरे विभाषा-
ऽप्राणिषु ।
१८ [3]कर्तृकरणयोस्तृतीया ।
१९ [4]सहयुक्तेऽप्रधाने ।
२० [5]येनाङ्गविकारः ॥ १ ॥
२१ [6]इत्थम्भूतलक्षणे ।
२२ [7]संज्ञोऽन्यतरस्यां कर्मणि ।
२३ [8]हेतौ ।
२४ [9]अकर्तर्यृणे पञ्चमी ।
२५ [10]विभाषा गुणेऽस्त्रियाम् ।
२६ [11]षष्ठी हेतुप्रयोगे ।
२७ [12]सर्वनाम्नस्तृतीया च ।
२८ [13]अपादाने पञ्चमी ।
२९ [14]अन्यारादितरर्तेदिक्शब्दा-
ञ्चूत्तरपदाजाहियुक्ते ।
३० [15]षष्ठ्यतसर्थप्रत्ययेन ।
३१ [16]एनपा द्वितीया ।

---

(१) एभिर्योगे चतुर्थी स्यात् । (२) प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । (३) अनभिहिते कर्तरि करणे च तृतीया स्यात् । (४) सहार्थेन युक्ते अप्रधाने तृतीया स्यात् । (५) येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । (६) कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । (७) सम्पूर्वस्य जानातेः कर्मणि तृतीया स्यात् । (८) हेत्वर्थे तृतीया स्यात् । (९) कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । (१०) गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । (११) हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । (१२) सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । (१३) अपादाने पञ्चमी स्यात् । (१४) एतैर्योगे पञ्चमी स्यात् । (१५) एतद्योगे षष्ठी स्यात् । (१६) एनबन्तेन योगे द्वितीया स्यात् ।

३२ पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।
३३ करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य
३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।
३५ दूरान्तिकार्थेभ्यो द्वितीया च
३६ सप्तम्यधिकरणे च ।
३७ यस्य च भावेन भावलक्षणम् ।
३८ षष्ठी चानादरे ।
३९ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।
४० आयुक्तकुशलाभ्यां चासेवायाम् ॥ २ ॥
४१ यतश्च निर्धारणम् ।
४२ पञ्चमी विभक्ते ।
४३ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।
४४ प्रसितोत्सुकाभ्यां तृतीया च ।

(१) एभिर्योगे तृतीया स्यात्पञ्चमी द्वितीये च । (२) एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । (३) एतैर्योगे षष्ठी स्यात्पञ्चमी च । (४) एभ्यो द्वितीया स्याच्चात्पञ्चमीतृतीये । (५) अधिकरणे सप्तमी स्यात् । चात् दूरान्तिकार्थेभ्यः । (६) यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । (७) अनादराऽधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । (८) एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । (९) आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । (१०) जातिगुणक्रियासञ्ज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः । (११) निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । (१२) आभ्यां योगे सप्तमी स्यादर्चायां नतु प्रतेः प्रयोगे (१३) आभ्यां योगे तृतीया स्याच्चात्सप्तमी ।

४५ नक्षत्रे च लुपि।[1]
४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा।[2]
४७ संबोधने च।[3]
४८ सामन्त्रितम्।[4]
४९ एकवचनं सम्बुद्धिः।[5]
५० षष्ठी शेषे।[6]
५१ ज्ञोऽविदर्थस्य करणे।[7]
५२ अधीगर्थदयेशां कर्मणि।[8]
५३ कृञः प्रतियत्ने।[9]
५४ रुजार्थानां भाववचनानामज्वरेः[10]
५५ आशिषि नाथः।[11]
५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।[12]
५७ व्यवहृपणोः समर्थयोः।[13]
५८ दिवस्तदर्थस्य।[14]

(१) नक्षत्रे प्रकृत्यर्थे यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययार्थस्तत्र वर्त्तमानतृतीयासप्तम्यौ स्तोऽधिकरणे। (२) प्रातिपदिकार्थमात्र लिङ्गमात्राद्याधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात्। (३) इह प्रथमा स्यात्। (४) सम्बोधने या प्रथमा तदन्तमामन्त्रितसञ्ज्ञं स्यात्। (५) सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसञ्ज्ञं स्यात्। (६) कारकप्रातिपदिकार्थव्यतिरिक्त स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी स्यात्। (७) जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। (८) एषां कर्मणि शेषे षष्ठी स्यात्। (९) कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने। (१०) भावकर्तृकाणां ज्वरवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। (११) आशीरर्थस्य नाथतः शेषे कर्मणि षष्ठी स्यात्। (१२) हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। (१३) समर्थयोरनयोः शेषे कर्मणि षष्ठी स्यात्। (१४) द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्।

५९ विभाषोपसर्गे ।
६० द्वितीया[2] ब्राह्मणे । ३ ।
६१ प्रेष्यब्रुवोर्हविषो[3] देवतासम्प्रदाने ।
६२ चतुर्थ्यर्थे[4] बहुलं छन्दसि ।
६३ यजेश्च[5] करणे ।
६४ कृत्वोऽर्थप्रयोगे[6] कालेऽधिकरणे ।
६५ कर्तृकर्मणोः[7] कृति ।
६६ उभयप्राप्तौ[8] कर्मणि ।
६७ क्तस्य[9] च वर्तमाने ।
६८ अधिकरणवाचिनश्च[10] ।
६९ न[11] लोकाऽव्ययनिष्ठाखलर्थतृनाम् ।
७० अकेनोर्भविष्यदाधमर्ण्ययोः[12]
७१ कृत्यानां[13] कर्तरि वा ।
७२ तुल्यार्थैरतुलोपमाभ्यां[14] तृतीयाऽन्यतरस्याम् ।

---

(१) पूर्वयोगाऽपवादः। उपसर्गपूर्वस्य दिवस्तदर्थस्य कर्मणि वा षष्ठी स्यात् । (२) ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात् । (३) देवतासम्प्रदानेऽर्थे वर्त्तमानयोः प्रेष्यब्रुवोः कर्मणोः हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात् । (४) अत्र षष्ठी स्यात् । (५) इह छन्दसि बहुलं षष्ठी स्यात् । (६) कृत्वोर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । (७) कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । (८) उभयोः प्रसिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात् । (९) वर्त्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । (१०) क्तस्य योगे षष्ठी स्यात् । (११) एषां प्रयोगे षष्ठी न स्यात् । (१२) भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । (१३) षष्ठी वा स्यात् । (१४) तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी ।

७३ चतुर्थी चाशिष्यायुष्यमद्र-
भद्रकुशलसुखार्थहितैः ।
[ अनभिहित इत्थंभूतय-
तश्च प्रेष्यब्रुवोस्त्रयोदश]॥

इति द्वितीयाध्यायस्य
तृतीयः पादः ।

—–—

## अथ चतुर्थः पादः ।

१ द्विगुरेकवचनम् ।

२ द्वन्द्वश्च प्राणितूर्यसेनाङ्गा-
नाम् ।

३ अनुवादे चरणानाम् ।

४ अध्वर्युक्रतुरनपुंसकम् ।

५ अध्ययनतोऽविप्रकृष्टाख्या
नाम् ।

६ जातिरप्राणिनाम् ।

७ विशिष्टलिङ्गो नदीदेशो
ऽग्रामाः ।

८ क्षुद्रजन्तवः ।

९ येषां च विरोधः शाश्वतिकः ।

१० शूद्राणामनिरवसितानाम् ।

---

(१) एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि ।

इति द्वितीयाध्यायस्य तृतीयः पादः ।

———

(२) द्विग्वर्थः समाहार एकवत्स्यात् । (३) एषां द्वन्द्व एकवत् स्यात् । (४) चरणानां द्वन्द्व एकवत्स्यात्सिद्धस्योपन्यासे । (५) यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् । (६) अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्स्यात् । (७) प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत्स्यात् । (८) ग्रामवर्ज्यनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् । (९) एषां समाहारे द्वन्द्व एकवत्स्यात् । (१०) एषां प्राग्वत् । (११) अबहिष्कृतानां शूद्राणां प्राग्वत् ।

११ [1]गवाश्वप्रभृतीनि च ।

१२ [2]विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।

१३ [3]विप्रतिषिद्धं चानधिकरणवाचि ।

१४ [4]न दधिपयआदीनि ।

१५ [5]अधिकरणैतावत्त्वे च ।

१६ [6]विभाषा समीपे ।

१७ [7]स नपुंसकम् ।

१८ [8]अव्ययीभावश्च ।

१९ [9]तत्पुरुषोऽनञ्कर्मधारयः ।

२० [10]संज्ञायां कन्थोशीनरेषु ।

२१ [11]उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।

२२ [12]छाया बाहुल्ये ।

२३ [13]सभा राजाऽमनुष्यपूर्वा ।

(१)एतानि यथोच्चारितानि साधूनि स्युः। (२)वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादि द्वन्द्वत्रयञ्च प्राग्वद्वा। (३) विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा-स्यात्। (४) एतानि नैकवत्स्युः। (५) द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात्। (६) अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात्। (७) समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। (८) अयं नपुंसकं स्यात्।

(९) अधिकारोऽयम्। (१०) कन्थान्तस्तत्पुरुषः क्लीबं स्यात् सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः सञ्ज्ञा। (११) उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्रथम्यं चेदाख्यातुमिष्यते। (१२) छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये। (१३) राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्।

२४ अशाला[1] च ।
२५ विभाषा[2] सेनासुराच्छायाशालानिशानाम् ।
२६ परवल्लिङ्गं[3] द्वन्द्वतत्पुरुषयोः ।
२७ पूर्ववदश्ववडवौ[4] ।
२८ हेमन्तशिशिरावहोरात्रे[5] च छन्दसि ।
२९ रात्राह्नाहाः[6] पुंसि ।
३० अपथं[7] नपुंसकम् ।
३१ अर्धर्चाः[8] पुंसि च ।
३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ[9] ।
३३ एतदस्त्रतसोस्त्रतसौ[10] चानुदात्तौ ।
३४ द्वितीयाटौस्स्वेनः[11] ।
३५ आर्धधातुके[12] ।
३६ अदो[13] जग्धिर्ल्यप्ति किति ।
३७ लुङ्सनोर्घस्लृ[14] ।
३८ घञपोश्च[15] ।
३९ बहुलं छन्दसि[16] ।

(१) संघान्तार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् । (२) एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् । (३) एतयोः परपदस्येव लिङ्गं स्यात् । (४) एतयोः पूर्ववल्लिङ्गं स्यात् । ( ५ ) द्वन्द्वः पूर्ववल्लिङ्गः । ( ६ ) एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । (७) अयं नपुंसकं स्यात् । तत्पुरुषे इत्येव । (८) अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । (९) अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ । (१०) अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः । (११) द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । (१२) अधिकारोऽयम् । (१३) अदो जग्धिः स्यात् ल्यपि तादौ किति च । (१४) अदो घस्लृ स्यात् लुङि सनि च । (१५) अदेर्घस्लृ स्यात् घञि अपि च । (१६) अदो घस्लादेशः स्यात् ।

४० लिट्यन्यतरस्याम्[1] ।२।
४१ वेञो वयिः[2] ।
४२ हनो वध लिङि[3] ।
४३ लुङि च[4] ।
४४ आत्मनेपदेष्वन्यतरस्याम्[5] ।
४५ इणो गा लुङि[6] ।
४६ णौ गमिरबोधने[7] ।
४७ सनि च[8] ।
४८ इङश्च[9] ।
४९ गाङ् लिटि[10] ।
५० विभाषा लुङ्लृङोः[11] ।
५१ णौ च संश्चङोः[12] ।
५२ अस्तेर्भूः[13] ।
५३ ब्रुवो वचिः[14] ।
५४ चक्षिङः ख्याञ्[15] ।
५५ वा लिटि[16] ।
५६ अजेर्व्यघञपोः[17] ।
५७ वा यौ[18] ।

(१) अदो घस्लृ वा स्याल्लिटि। (२) वेञो वयिर्वा स्याल्लिटि। (३) हनो वधादेश स्याल्लिङि। (४) हनो वधादेशो लुङि च। (५) हनो वधादेशो वा लुङि आत्मनेपदेषु परेषु। (६) इणो गादेशो लुङि। (७) इणो गमिः स्याण्णौ। (८) इणो गमिः स्यात्सनि न तु बोधने। (९) इङो गमिः स्यात्सनि। (१०) इङो गाङ् स्याल्लिटि। (११) इङो गाङ् वा स्यात्। (१२) सन्परे चङ्परे च णौ वयतेः सम्प्रसारणं वा स्यात्। (१३) अस्तेर्भू-आदेशः स्यात् आर्द्धधातुके। (१४) ब्रुवो वचिः स्यादार्द्धधातुकविषये। (१५) चक्षिङःख्याञादेश आर्द्धधातुके। (१६) चक्षिङः ख्याञादेशो वा लिटि। (१७) अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा। (१८) अजेर्वी वा स्याद्यौ।

५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ।
५९ पैलादिभ्यश्च ।
६० इञः प्राचाम् । ३ ।
६१ न तौल्वलिभ्यः ।
६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ।
६३ यस्कादिभ्यो गोत्रे ।
६४ यञञोश्च ।
६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।
६६ बह्वच इञः प्राच्यभरतेषु ।
६७ न गोपवनादिभ्यः ।
६८ तिककितवादिभ्यो द्वन्द्वे ।
६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ।

( १ ) ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्तात्—ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् । ( २ ) एभ्यो युवप्रत्ययस्य लुक् । ( ३ ) गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेद्गोत्रं प्राचां भवति । ( ४ ) तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात् । ( ५ ) बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे नतु स्त्रियाम् । ( ६ ) एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । ( ७ ) गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । ( ८ ) एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे नतु स्त्रियाम् । ( ९ ) बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्त्तमानस्तस्य लुक् स्यात् । (१०) एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात् । (११) एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्यात् द्वन्द्वे । ( १२ ) एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्यात् द्वन्द्वे चाऽद्वन्द्वे च ।

७० आगस्त्यकौण्डिन्ययोरगस्ति कुण्डिनच् ।[1]
७१ सुपो धातुप्रातिपदिकयोः ।[2]
७२ अदिप्रभृतिभ्यः शपः ।[3]
७३ बहुलं छन्दसि ।[4]
७४ यङोऽचि च ।[5]
७५ जुहोत्यादिभ्यः श्लुः ।[6]
७६ बहुलं छन्दसि ।[7]
७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।[8]
७८ विभाषा घ्राधेट्शाच्छासः ।[9]
७९ तनादिभ्यस्तथासोः ।[10]
८० मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।[11] ४ ।
८१ आमः ।[12]
८२ अव्ययादाप्सुपः ।[13]
८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।[14]
८४ तृतीयासप्तम्योर्बहुलम् ।[15]
८५ लुटः प्रथमस्य डारौरसः ।[16]
[द्विगुरुपञ्चोपक्रमं वेञो वयिर्नं तौल्वलिभ्य आमः पञ्च ॥]
इति द्वितीयाध्यायस्य चतुर्थः पादः ।

---

(१) एतयोरवयवस्य गोत्रप्रत्ययस्याऽणो यञश्च बहुषु लुक् स्यादवशिष्टस्य प्रकृतिभागस्य यथासङ्ख्यम् अगस्ति कुण्डिनच् एतावादेशौ स्तः । (२) एतयोरवयवस्य सुपो लुक् स्यात् । (३) एभ्यः शपो लुक् स्यात् । (४) छन्दसि विषये शपो बहुलं लुक् स्यात् । (५) यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनाऽपि बहुलं लुक् स्यात् । (६) शपः श्लुः स्यात् । (७) छन्दसि विषये बहुलं शपः श्लुर्भवति । (८) एभ्यः सिचो लुक् स्यात् । (९) एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । (१०) तनादेः सिचो वा लुक् स्यात्तथासोः परतः । (११) एभ्यो लेर्लुक् स्यान्मन्त्रे । (१२) आमः परस्य लुक् स्यात् । (१३) अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । (१४) अदन्तादव्ययीभावात्सुपो न लुक् किन्तु तस्य पञ्चमीं विना अमादेशः । (१५) अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । (१६) लुटः प्रथमस्य डा रौ रस् एते क्रमात् स्युः ॥

इति द्वितीयोऽध्यायः ।

# अथ तृतीयोऽध्यायः ।

## प्रथम पादः ।

१ प्रत्ययः ।
२ परश्च ।
३ आद्युदात्तश्च ।
४ अनुदात्तौ सुप्पितौ ।
५ गुप्तिज्किद्भ्यः सन् ।
६ मान्वधदान्शान्भ्यो दीर्घश्चाऽभ्यासस्य ।
७ धातोः कर्मणः समानकर्तृकादिच्छायां वा ।
८ सुप आत्मनः क्यच् ।
९ काम्यच्च ।
१० उपमानादाचारे ।
११ कर्तुः क्यङ् सलोपश्च ।
१२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।
१३ लोहितादिडाज्भ्यः क्यष् ।
१४ कष्टाय क्रमणे ।

---

(१) अधिकारोयम् । (२) अयमपि अधिकारः। (३) प्रत्यय आद्युदात्तः स्यात्। (४) सुपः पितश्च प्रत्यया अनुदात्ताः । (५) एभ्यः सन् स्यात् । (६) सूत्रद्वयोक्तेभ्यः सन् स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । (७) इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । (८) इषिकर्मण एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा । (९) उक्तविषये काम्यच्स्यात् । (१०) उपमानात्कर्मणः सुबन्तादाचारेर्थे क्यच्स्यात् । (११) उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा । (१२) अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलन्तानामेषां लोपश्च । (१३) लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् । (१४) चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् ।

१५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ।
१६ बाष्पोष्मभ्यामुद्वमने ।
१७ शब्दवैरकलहाभ्रकण्व मेघेभ्यः करणे ।
१८ सुखादिभ्यः कर्तृवेदनायाम् ।
१९ नमोवरिवश्चित्रङः क्यच् ।
२० पुच्छभाण्डचीवराण्णिङ् ।१।
२१ मुण्डमिश्रश्लक्ष्णलवणव्रत-वस्त्रहलकलकृततूस्तेभ्यो णिच् ।
२२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।
२३ नित्यं कौटिल्ये गतौ ।
२४ लुपसदचरजपजभदहदश-गॄभ्यो भावगर्हायाम् ।
२५ सत्यापपाशरूपवीणातूल-श्लोकसेनालोमत्वचवर्म-वर्णचूर्णचुरादिभ्यो णिच् ।
२६ हेतुमति च ।
२७ कण्ड्वादिभ्यो यक् ।

(१) रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् । (२) आभ्यां क्यङ् । (३) एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् । (४) सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः । (५) एभ्यः क्यच् प्रत्ययः स्यात् । (६) पुच्छ-भाण्ड चीवर इत्येतेभ्यो णिङ् प्रत्ययः स्यात् । (७) एभ्यः करणे णिच् प्रत्ययः स्यात् । (८) पौनःपुन्यं भृशार्थश्च क्रिया-समभिहारस्तस्मिन् द्योत्ये यङ् स्यात् । (९) गत्यर्थात्कौटिल्ये एव यङ् स्यान्न तु क्रियासमभिहारे ।(१०) एभ्यो धात्वर्थ-गतगर्हायामेव यङ् स्यात् ।(११) एभ्यो णिच् ।(१२) प्रयोजकव्यापारे प्रेषणादौ च वाच्ये धातोर्णिच् । (१३) एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे ।

२८ [1]गुपूधूपविच्छिपणिपनिभ्य आयः ।

२९ [2]ऋतेरीयङ् ।

३० [3]कमेर्णिङ् ।

३१ [4]आयादय आर्धधातुके वा ।

३२ [5]सनाद्यन्ता धातवः ।

३३ [6]स्यतासी लृलुटोः ।

३४ [7]सिब्बहुलं लेटि ।

३५ [8]कास्प्रत्ययादाममन्त्रे लिटि ।

३६ [9]इजादेश्च गुरुमतोऽनृच्छः ।

३७ [10]दयायासश्च ।

३८ [11]उषविदजागृभ्योऽन्यतरस्याम् ।

३९ [12]भीह्रीभृहुवां श्लुवच्च ।

४० [13]कृञ्चानुप्रयुज्यते लिटि । २ ।

४१ [14]विदांकुर्वन्त्वित्यन्यतरस्याम् ।

४२ [15]अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ।

---

(१) एभ्यः आयप्रत्ययः स्यात् स्वार्थे । (२) अस्मादीयङ्प्रत्ययः स्यात् । (३) स्वार्थे णिङ् स्यात् । (४) आर्धधातुकविवक्षायमायादयो वा स्युः । (५) सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । (६) धातोः स्यतासी एतौ स्तः लृलुटोः परतः । (७) लेटि परतो बहुलं सिप् स्यात् । (८) कासधातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि नतु मन्त्रे ।

(९) इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि । (१०) दय् अय् आस् एभ्य आम् स्याल्लिटि । (११) एभ्यो लिट्याम्वा । (१२) एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । (१३) आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । (१४) वेत्तेर्लोटि आम्, गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । (१५) आद्येषु चतुर्षु लुङि आम् स्यात् अक इत्यनुप्रयोगश्च वेदे ।

४३ च्लि लुङि ।
४४ च्लेः सिच् ।
४५ शल इगुपधादनिटः क्सः ।
४६ श्लिष आलिङ्गने ।
४७ न दृशः ।
४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।
४९ विभाषा धेट्श्व्योः ।
५० गुपेश्छन्दसि ।
५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।
५२ अस्यतिवक्तिख्यातिभ्योऽङ् ।
५३ लिपिसिचिह्वश्च ।
५४ आत्मनेपदेष्वन्यतरस्याम् ।
५५ पुषादिद्युताद्य्लृदितः परस्मैपदेषु
५६ सर्तिशास्त्यर्तिभ्यश्च ।
५७ इरितो वा ।
५८ जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।

(१) धातोः च्लिप्रत्ययः स्याल्लुङि । (२) च्लेः सिजादेशः स्यात् । (३) इगुपधो यः शलन्तः तस्मादनिटश्च्लेः क्सादेशः स्यात् । (४) श्लिषः च्लेः क्सादेशः स्यादालिङ्गने । (५) दृशश्च्लेः क्सो न । (६) ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे । (७) आभ्यां च्लेश्चङ्वा स्यात्कर्तृवाचिनि लुङि परे । (८) गुपेः परस्य च्लेश्चङ्वा स्याच्छन्दसि । (९) एभ्यो ण्यन्तेभ्यश्छन्दसि च्लेश्चङ् न । (१०) एभ्यश्च्लेरङ् स्यात्कर्त्रर्थे लुङि । (११) एभ्यश्च्लेरङादेशः स्यात् । (१२) एभ्य आत्मनेपदेषु परतश्च्लेरङादेशो वा स्यात् । (१३) श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङादेशः स्यात् । (१४) एभ्यश्च्लेरङादेशः स्यात् । (१५) इरितो धातोश्च्लेरङ्वा स्यात् । (१६) एभ्यः परस्य च्लेरङ्वा

५९ कृमृदृरुहिभ्यश्छन्दसि[1] ।
६० चिण् ते पदः[2] ।३।
६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्[3] ।
६२ अचः कर्मकर्तरि[4] ।
६३ दुहश्च[5] ।
६४ न रुधः[6] ।
६५ तपोऽनुतापे च[7] ।
६६ चिण् भावकर्मणोः[8] ।
६७ सार्वधातुके यक्[9] ।
६८ कर्तरि शप्[10] ।
६९ दिवादिभ्यः श्यन्[11] ।
७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः[12] ।
७१ यसोऽनुपसर्गात्[13] ।
७२ संयसश्च[14] ।
७३ स्वादिभ्यः श्नुः[15] ।
७४ श्रुवः शृ च[16] ।
७५ अक्षोऽन्यतरस्याम्[17] ।

स्यात्। (१) एभ्यः परस्य च्लेरङादेशः स्याच्छन्दसि। (२) पदश्च्लेश्चिण् स्यात्तशब्दे परे। (३) एभ्यः श्च्लेश्चिण् वा स्यात्तशब्दे परे। (४) अजन्तात् च्लेश्चिण्वा स्यात् कर्मकर्तरि। (५) दुहश्च्लेश्चिण्वा स्यात्कर्मकर्त्तरि। (६) असात् च्लेश्चिण्न। (७) तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च। (८) च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे परे। (९) धातोर्यक् प्रत्ययः स्यात् भावकर्मवाचिनि सार्वधातुके परे। (१०) कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात्। (११) एभ्यः श्यन् स्यात्। (१२) एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे। (१३) अनुपसर्गाद्यसः श्यन् वा स्यात्। (१४) श्यन्वा स्यात्। (१५) एभ्यः श्नुप्रत्ययः स्यात्। (१६) श्रुवः 'शृ' इत्यादेशः स्याच्छ्नुप्रत्ययश्च। (१७) अक्षो वा श्नुप्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके परे।

७६ तनूकरणे तक्षः[1] ।
७७ तुदादिभ्यः शः[2] ।
७८ रुधादिभ्य श्नम्[3] ।
७९ तनादिकृञ्भ्य उः[4] ।
८० धिन्विकृण्व्योर च[5] ।४।
८१ क्र्यादिभ्यः श्ना[6] ।
८२ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च[7] ।
८३ हलः श्नः शानज्झौ[8] ।
८४ छन्दसि शायजपि[9] ।
८५ व्यत्ययो बहुलम्[10] ।
८६ लिङ्याशिष्यङ्[11] ।
८७ कर्मवत्कर्मणा तुल्यक्रियः[12] ।
८८ तपस्तपःकर्मकस्यैव[13] ।
८९ न दुहस्नुनमां यक्चिणौ[14] ।
९० कुषिरजोः प्राचां श्यन् परस्मैपदं च[15] ।
९१ धातोः[16] ।

(१) श्नुः स्याद्वा शब्विषये । (२) एभ्यः शः प्रत्ययः स्यात् । (३) रुधादिभ्यः श्नम् प्रत्ययः स्यात् । (४) तनादेः कृञश्च उः प्रत्ययः स्यात् । (५) अनयोरकारोऽन्त्यादेशः स्यादुप्रत्ययश्च शब्विषये । (६) एभ्यः श्नाप्रत्ययः स्यात् । (७) एभ्यः श्नुप्रत्ययः स्यात्, चात् श्ना । (८) हलः परस्य श्नः शानजादेशः स्याद्धौ परे । (९) छन्दसि श्नः शायजादेशः स्यात्, शानजपि । (१०) विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि । (११) आशीर्लिङि परे धातोरङ् स्याच्छन्दसि । (१२) कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । (१३) अस्य कर्ता कर्मवत् स्यात् । (१४) एषां कर्मकर्तरि यक्चिणौ न स्तः। (१५) अनयोः कर्मकर्तरि न यक्, किन्तु श्यन्परस्मैपदं च वा । (१६) अधिकारोऽयम् ।

९२ तत्रोपपदं सप्तमीस्थम्[1]।
९३ कृदतिङ्[2]।
९४ वाऽसरूपोऽस्त्रियाम्[3]।
९५ कृत्याः[4]।
९६ तव्यत्तव्याऽनीयरः[5]।
९७ अचो यत्[6]।
९८ पोरदुपधात्[7]।
९९ शकिसहोश्च[7]।
१०० गदमदचरयमश्चानुपसर्गे[9]।
१०१ अवद्यपण्यवर्या गर्ह्य-पणितव्याऽनिरोधेषु[10]।
१०२ वह्यं करणम्[11]।
१०३ अर्यः स्वामिवैश्ययोः[12]।
१०४ उपसर्या काल्या प्रजने[13]।
१०५ अजर्यं सङ्गतम्[14]।
१०६ वदः सुपि क्यप् च[15]।
१०७ भुवो भावे[16]।

(१) सप्तम्यन्ते पदे 'कर्मणि' इत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्। (२) अस्मिन् धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्सञ्ज्ञः स्यात्। (३) अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्सर्गस्य बाधको वा स्यात्। (४) अधिकारोऽयं ण्वुलः प्राक्। (५) धातोरेते प्रत्ययाः स्युः। (६) अजन्ताद्धातोर्यत्प्रत्ययः स्यात्। (७) पवर्गान्तादुपसर्गाद्यत्स्यात्। (८) अनयोर्यत्प्रत्ययः स्यात्। (९) गदादिभ्योऽनुपसृष्टेभ्यो यत्प्रत्ययः स्यात्। (१०) अवद्यादयो निपात्यन्ते गर्ह्यादिष्वर्थेषु। (११) वहेः करणे यत्प्रत्ययो निपात्यते। (१२) 'ऋ' इत्यस्माद्यत् स्यादनयोरर्थयोः। (१३) उपपूर्वात्सरतेः सप्तेर्वा यन्निपात्यते, गर्भग्रहणे प्राप्तकाला चेत्। (१४) नञ्पूर्वाज्जीर्यतेः कर्तरि यत्स्यात्, संगते चेद्विशेष्यम्। (१५) वदेर्भावे क्यप् स्याच्चाद्यत्, अनुपसर्गे सुप्युपपदे। (१६) भवतेरनुपसर्गे सुप्युपपदे भावे क्यप्स्यात्।

१०८ हनस्त च। [1]

१०९ एतिस्तुशास्वृदृजुषः क्यप्। [2]

११० ऋदुपधाच्चाक्लृपिचृतेः। [3]

१११ ई च खनः। [4]

११२ भृञोऽसंज्ञायाम्। [5]

११३ मृजेर्विभाषा। [6]

११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः। [7]

११५ भिद्योद्ध्यौ नदे। [8]

११६ पुष्यसिद्ध्यौ नक्षत्रे। [9]

११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु। [10]

११८ प्रत्यपिभ्यां ग्रहेश्छन्दसि। [11]

११९ पदास्वैरिबाह्यापक्ष्येषु च। [12]

१२० विभाषा कृवृषोः।६। [13]

१२१ युग्यं च पत्रे। [14]

१२२ अमावस्यदन्यतरस्याम्। [15]

१२३ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि। [16]

(१) अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्स्यात्तकारश्चान्तादेशः। (२) एभ्यः क्यप् स्यात्। (३) ऋदुपधात्क्यप्स्यात्क्लृपिचृती वर्जयित्वा। (४) खनेरीकारोऽन्तादेशः स्यात्। चात् क्यप्। (५) भृञः क्यप्स्यादसञ्ज्ञायाम्। (६) मृजेः क्यब्वा स्यात्, पक्षे ण्यत्। (७) एते क्यबन्ता निपात्यन्ते। (८) भिदेरुज्झेश्च क्यप्स्यात्। (९) पुषेः सिद्धेश्च अधिकरणे क्यब्निपात्यते। (१०) पूङ्नीञ्जिभ्यः क्यप् निपात्यते एष्वर्थेषु। (११) एतत्पूर्वाद्ग्रहेः क्यप्स्याच्छन्दसि। (१२) एष्वर्थेषु ग्रहेः क्यप् स्यात्। (१३) आभ्यां क्यब्वा स्यात्। (१४) अत्र क्यप् कुत्वं च निपात्यते वाहनेऽर्थे। (१५) अमोपपदाद्वसेरधिकरणे ण्यत्। (१६) एते निपात्यन्ते छन्दसि।

१२४ [1]ऋहलोर्ण्यत् ।

१२५ [2]ओरावश्यके ।

१२६ [3]आसुयुवपिरपित्रपिचमश्च

१२७ [4]आनाय्योऽनित्ये ।

१२८ [5]प्रणाय्योऽसंमतौ ।

१२९ [6]पाय्यसान्नाय्यनिकाय्य-
धाय्या मानहविर्निवास-
सामिधेनीषु ।

१३० [7]क्रतौ कुण्डपाय्यसञ्चाय्यौ।

१३१ [8]अग्नौ परिचाय्योपचाय्य-
समूह्याः ।

१३२ [9]चित्याग्निचित्ये च ।

१३३ [10]ण्वुल्तृचौ ।

१३४ [11]नन्दिग्रहिपचादिभ्यो
ल्युणिन्यचः ।

१३५ [12]इगुपधज्ञाप्रीकिरः कः ।

१३६ [13]आतश्चोपसर्गे ।

१३७ [14]पाघ्राध्माधेट्दृशः शः ।

१३८ [15]अनुपसर्गाल्लिम्पाविन्द-
धारिपारिवेद्युदेजिचेति-
सातिसाहिभ्यश्च ।

---

(१) ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात् । (२) उवर्णान्ताद्धातोर्ण्यत् स्यात् अवश्यंभावे द्योत्ये । (३) आङ्पूर्वात्सुनोतेर्य्वादिभ्यश्च ण्यत्स्यात् । (४) आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यतेऽनित्येऽभिधेये । (५) 'प्रणाय्य' इति निपात्यतेऽसंमतावभिधेये । प्रणाय्यश्चौरः । (६) एते निपात्यन्ते, मानादिष्वर्थेषु । (७) एतौ निपात्येते क्रतावभिधेये । (८) अग्निधारणार्थे स्थलविशेषे एते साधवः । (९) एतौ निपात्येते । (१०) धातोरेतौ स्तः । (११) नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । (१२) एभ्यः कः स्यात् । (१३) आदन्ताद्धातोरुपसर्गे 'उपपदे' कप्रत्ययः स्यात् । (१४) उपसर्गे उपपदे पादिभ्यः शप्रत्ययः स्यात् । (१५) अनुपसर्गेभ्यो लिम्पादिभ्यः शः स्यात् ।

१३९ [1]ददातिदधात्योर्विभाषा ।
१४० [2]ज्वलितिकसन्तेभ्यो णः ।
१४१ [3]श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ।
१४२ [4]दुन्योरनुपसर्गे ।
१४३ [5]विभाषा ग्रहः ।
१४४ [6]गेहे कः ।
१४५ शिल्पिनि ष्वुन् ।
१४६ गस्थकन् ।
१४७ ण्युट् च ।
१४८ हश्च व्रीहिकालयोः ।
१४९ [11]प्रुसृल्वः समभिहारे वुन् ।
१५० आशिषि [12]च ।

[ प्रत्ययो मुण्डविदां दीपजनक्रयादिभ्योऽवद्ययुग्मं च श्याद्व्यधा दश ॥ ]

इति तृतीयाऽध्यायस्य प्रथमः पादः ।



(१) आभ्यां विभाषा श-प्रत्ययः स्यात् । (२) ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । (३) श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । (४) अनुपसृष्टाभ्यामाभ्यां णः स्यात् । (५) ग्रहेर्णो वा स्यात् । (६) गेहे-कर्तरि ग्रहे कः स्यात् । (७) क्रियाकौशलं शिल्पं, तद्वत्कर्तरि ष्वुन् स्यात् । (८) गायतेः स्थकन् स्यात् शिल्पिनि कर्तरि । (९) गायतेर्ण्युट् स्यात् शिल्पिनि कर्त्तरि । (१०) हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि । (११) एभ्यो वुन्स्यात्समभिहारे । (१२) आशीर्विषयार्थवृत्तेधातोर्वुन् स्यात् ।

इति तृतीयाध्यायस्य प्रथमपादः ॥



## अथ द्वितीयः पादः ।

१ कर्मण्यण् ।
२ ह्वावामश्च ।
३ आतोऽनुपसर्गे कः ।
४ सुपि स्थः ।
५ तुन्दशोकयोः परिमृजापनुदोः
६ प्रे दाज्ञः ।
७ समि ख्यः ।
८ गापोष्टक् ।
९ हरतेरनुद्यमनेऽच् ।
१० वयसि च ।
११ आङि ताच्छील्ये ।
१२ अर्हः ।
१३ स्तम्बकर्णयो रमिजपोः ।

(१) कर्मण्युपपदे धातोरण् स्यात् । कुम्भकारः । (२) एभ्यः कर्मण्युपपदे अण् स्यात् । स्वर्गह्वायः । (३) आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् नाण् । गोदः । (४) सुपि । सुपि उपपदे आदन्तात्कः स्यात् । द्विपः । ततः—स्थः । सुपि तिष्ठतेः कः स्यात् । आखूत्थः (५) तुन्दशोकयोः कर्मणो-रुपपदयोराभ्यां कः स्यात् । तुन्दपरि-मृजः । (६) दारूपाज्ज्ञानातेश्च प्रोप-सृष्टात्कर्मण्युपपदे कः स्यात् । सर्वप्रदः। (७) सम्पूर्वात्ख्यातेः कर्मण्युपपदे कः स्यात् । गोसङ्ख्यः । (८) अनुप-सृष्टाभ्यामाभ्यां टक् स्यात् कर्मण्युपपदे । सामगः । (९) अनुद्यमनेर्थे वर्त्त-मानाद्धरतेः कर्मण्युपपदे अच् प्रत्ययः स्यात् । अंशहरः । (१०) हरतेः कर्मण्युपपदेऽच् स्याद्वयसि । कवचहरः कुमारः । (११) आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच् स्यात्ताच्छील्ये । पुष्पा-हरः । (१२) अर्हतेरच् स्यात् कर्म-ण्युपपदे । पूजार्हा ब्राह्मणी । (१३) एतयोरुपपदयो रमिजपोरच् स्यात् । स्तम्बेरमः ।

१४ शमि धातोः संज्ञायाम् ।
१५ अधिकरणे शेतेः ।
१६ चरेष्टः ।
१७ भिक्षासेनादायेषु च ।
१८ पुरोऽग्रतोऽग्रेषु सर्तेः ।
१९ पूर्वे कर्तरि ।
२० कृञो हेतुताच्छील्यानुलोम्येषु ।१।
२१ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ।
२२ कर्मणि भृतौ ।
२३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।
२४ स्तम्बशकृतोरिन् ।
२५ हरतेर्दृतिनाथयोः पशौ ।
२६ फलेग्रहिरात्मम्भरिश्च ।
२७ छन्दसि वनसनरक्षिमथाम् ।

(१) शमि-उपपदे धातोरच् स्यात्सञ्ज्ञायाम् । शङ्करः । (२) अधिकरणे सुबन्ते शेतेरच् स्यात् । खशयः । (३) अधिकरणे उपपदे चरेष्टः स्यात् । कुरुचरः । (४) एषूपपदेषु चरेष्टः स्यात् । भिक्षाचरः । (५) एषूपपदेषु सर्तेष्टः स्यात् । पुरस्सरः । (६) कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् । पूर्वसरः । (७) एषु द्योत्येषु करोतेष्टः स्यात् । यशस्करी । (८) एषु कृञष्टच् स्यात् । दिवाकरः । (९) कर्मशब्दे उपपदे करोतेष्टः । कर्मकरः । (१०) एषु कृञष्टो न । शब्दकारः । (११) स्तम्बशकृतोः कर्मणोरुपपदयोरिन् स्यात् । स्तम्बकरिर्वत्सः । (१२) दृतिनाथयोरुपपदयोर्हञ इन् स्यात्पशौ कर्तरि । (१३) एतौ निपात्येते । फलेग्रहिः । (१४) एभ्यः कर्मण्युपपदे इन् स्याच्छन्दसि । ब्रह्मवनित्वा क्षत्रवनिम् ।

२८ एजेः खश् [1]।
२९ नासिकास्तनयोर्ध्माधेटोः [2]।
३० नाडीमुष्ट्योश्च [3]।
३१ उदि कूले रुजिवहोः [4]।
३२ वहाभ्रे लिहः [5]।
३३ परिमाणे पचः [6]।
३४ मितनखे च [7]।
३५ विध्वरुषोस्तुदः [8]।
३६ असूर्यललाटयोर्दृशितपोः [9]।
३७ उग्रम्पश्येरंमदपाणिन्धमाश्च [10]।
३८ प्रियवशे वदः खच् [11]।
३९ द्विषत्परयोस्तापेः [12]।
४० वाचि यमो व्रते [13]।२।
४१ पूःसर्वयोर्दारिसहोः [14]।
४२ सर्वकूलाभ्रकरीषेषु कषः [15]।

(१) ण्यन्तादेजेः खश्। जनमेजयः। (२) अनयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् स्यात्। स्तनन्धयः। (३) एतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् स्यात्। नाडिन्धमः। (४) उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात्। कूलमुद्रुजः। (५) एतयोः कर्मणोरुपपदयोर्लिहेः खश्। वहंलिहो गौः। (६) परिमाणे कर्मण्युपपदे पचेः खश् स्यात्। प्रस्थम्पचा। (७) एतयोः कर्मणोरुपपदयोः पचेः खश्। मितम्पचः। (८) एतयोः कर्मणोरुपपदयोस्तुदेः खश्। विधुन्तुदः। (९) एतयोरुपपदयोराभ्यां खश् स्यात्। असूर्यम्पश्या। (१०) एते निपात्यन्ते। उग्रम्पश्यः। (११) एतयोः कर्मणोरुपपदयोर्वदेः खश् स्यात्। प्रियंवदः। (१२) एतयोः कर्मणोरुपपदयोस्तापेः खच् स्यात्। द्विषन्तपः। (१३) वाक्शब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये। वाचंयमः। (१४) एतयोः कर्मणोरुपपदयोराभ्यां खच्। पुरन्दरः। (१५) एषु कर्मसूपपदेषु कषतेः खच्। सर्वङ्कषः।

| | |
|---|---|
| ४३ मेघर्तिभयेषु कृञः। | ५० अपे क्लेशतमसोः। |
| ४४ क्षेमप्रियमद्रेऽण् च। | ५१ कुमारशीर्षयोर्णिनिः। |
| ४५ आशिते भुवः करणभावयोः। | ५२ लक्षणे जायापत्योष्टक्। |
| ४६ संज्ञायां भृतॄवृजिधारिसहितपिदमः। | ५३ अमनुष्यकर्तृके च। |
| ४७ गमश्च। | ५४ शक्तौ हस्तिकपाटयोः। |
| ४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः। | ५५ पाणिघताडघौ शिल्पिनि। |
| ४९ आशिषि हनः। | ५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। |

(१) एषु कर्मसूपपदेषु कृञः खच् स्यात्। मेघङ्करः। (२) एषु कृञोऽण् स्यात्, चात् खच्। क्षेमङ्करः। (३) आशितशब्दे उपपदे भवतेः खच्। आशितम्भवः। (४) एभ्यः खच् स्यात्सञ्ज्ञायाम्। विश्वम्भरः। (५) गमेः सुप्युपपदे खच् स्यात्सञ्ज्ञायाम्। सुतङ्गमः। (६) एषु गमेर्डः स्यात्। अन्तगः। (७) हन्तेः कर्मणि डः स्यादाशिषि। शत्रुहः। (८) अपपूर्वाद्धन्तेर्डः स्यात्। क्लेशापहः। (९) एतत्पूर्वाद्धन्तेर्णिनिः। कुमारघाती। (१०) हन्तेष्टक् स्याल्लक्षणवति कर्तरि। जायाघ्नः। (११) अमनुष्यकर्तृके वर्तमानाद्धन्तेः कर्मण्युपपदे टक्। जायाघ्नस्तिलकालकः। (१२) हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम्। हस्तिघ्नो ना। (१३) हन्तेष्टक् टिलोपो घत्वं च निपात्येते पाणिताडयोरुपपदयोः। पाणिघः। (१४) एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्।

५७ कर्तरि भुवः खिष्णुच्खुकञौ।
५८ स्पृशोऽनुदके क्विन्।
५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च।
६० त्यदादिषु दृशोऽनालोचने कञ्च।३।
६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्।
६२ भजो ण्विः।
६३ छन्दसि सहः।
६४ वहश्च।
६५ कव्यपुरीषपुरीष्येषु ञ्युट्।
६६ हव्येऽनन्तःपादम्।
६७ जनसनखनक्रमगमो विट्।
६८ अदोऽनन्ने।
६९ क्रव्ये च।
७० दुहः कब्घश्च।

आढयङ्करणम्। (१) आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। आढ्यम्भविष्णुः। (२) अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात्। घृतस्पृक्। (३) एभ्यः क्विन्। ऋत्विक्। (४) त्यदादिषूपपदेष्वज्ञानार्थाद् दृश्धातोः कञ् स्यात्। चात् क्विन्। तादृक्। (५) एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युषत्। (६) सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्। (७) सुप्युपपदे सहेर्ण्विः स्याच्छन्दसि। पृतनाषाट्। (८) सुप्युपपदे वहेश्छन्दसि ण्विः। प्रष्ठवाट्। (९) एषु वहेर्ञ्युट् स्याच्छन्दसि। कव्यवाहनः।

(१०) हव्ये उपपदे वहेर्ञ्युट् स्याच्छन्दसि। अनन्तःपादं चेद्वहतिर्वर्त्तते। (११) एभ्यः सुबन्ते उपपदे विट् स्याच्छन्दसि। (१२) अनन्ने सुप्युपपदेऽदेर्विट् स्यात्। आमात्। (१३) क्रव्यशब्दे उपपदे अदेर्विट् स्यात्। क्रव्यात्। (१४) दुहेः सुप्युपपदे कप्स्यात्, घकारश्चान्तादेशः।

७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।
७२ अवे यजः ।
७३ विजुपे छन्दसि ।
७४ आतो मनिन्क्वनिब्वनिपश्च ।
७५ अन्येभ्योऽपि दृश्यन्ते ।
७६ क्विप् च ।
७७ स्थः क च ।

कामदुधा । (१) एभ्यो ण्विन् स्यान्मन्त्रे । (२) अवे उपपदे यजेर्ण्विन् स्यान्मन्त्रे । (३) उपे उपपदे यजेर्विच् स्यात् । उपयट् । (४) सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः, चाद्विच् । सुदामा । (५) 'मनिन्' 'क्वनिप्' 'वनिप्' 'विच्' एते प्रत्यया धातोः स्युः । सुशर्मा । (६) अयमपि दृश्यते । उखास्रत् । (७) सुप्युपपदे तिष्ठतेः कः स्याच्चात् क्विप् । शंस्थः ।

७८ सुप्यजातौ णिनिस्ताच्छील्ये ।
७९ कर्तर्युपमाने ।
८० व्रते ।४।
८१ बहुलमाभीक्ष्ण्ये ।
८२ मनः ।
८३ आत्ममाने खश्च ।
८४ भूते ।

(८) अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये । उष्णभोजी । (९) उपमाने कर्त्तर्युपपदे धातोर्णिनिः स्यात् । उष्ट्रक्रोशी । (१०) सुबन्ते उपपदे धातोर्णिनिः स्याद्व्रते । स्थण्डिलशायी । (११) पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिणः । (१२) सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । (१३) स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात्, चाण्णिनिः । पण्डितम्मन्यः । (१४) अधिकारोऽयं 'वर्त्तमाने ल'-

८५ [1]करणे यजः ।
८६ [2]कर्मणि हनः ।
८७ [3]ब्रह्मभ्रूणवृत्रेषु क्विप् ।
८८ [4]बहुलं छन्दसि ।
८९ [5]सुकर्मपापमन्त्रपुण्येषु कृञः ।
९० [6]सोमे सुञः ।
९१ [7]अग्नौ चेः ।
९२ [8]कर्मण्यग्न्याख्यायाम् ।
९३ [9]कर्मणीनिविक्रियः ।
९४ [10]दृशेः क्वनिप् ।
९५ [11]राजनि युधि कृञः ।
९६ [12]सहे च ।
९७ [13]सप्तम्यां जनेर्डः ।
९८ [14]पञ्चम्यामजातौ ।
९९ [15]उपसर्गे च संज्ञायाम् ।

डिति यावत् । ( १ ) करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात् कर्तरि । सोमयाजी । ( २ ) कर्मण्युपपदे हन्तेर्णिनिः स्याद्भूते । पितृव्यघाती । ( ३ ) एषु कर्मसूपपदेषु हन्तेर्भूते क्विप्स्यात् । ब्रह्महा । (४) उपपदान्तरादपि हन्तेर्बहुलं क्विप् स्यात्। यो मातृहा पितृहा । ( ५ ) सौ कर्मादिषु च कृञः क्विप् स्यात् । सुकृत् । ( ६ ) सोमे कर्मण्युपपदे सुनोतेः क्विप्स्यात् । सोमसुत् । ( ७ ) अग्नौ कर्मण्युपपदे चिनोतेः क्विप्स्यात् । अग्निचित् । ( ८ ) कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्स्यात् , अग्न्याधारस्थलविशेषस्याख्याम् । श्येनचित् । ( ९ ) कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् । सोमविक्रयी (१०) दृशेः कर्मण्युपपदे क्वनिप्स्यात् । (११) राजन्छब्दे कर्मणि उपपदे क्वनिप् स्यात् । राजयुध्वा । (१२) सहे उपपदे युधिकृञोः क्वनिप् । सहयुध्वा । (१३) सप्तम्यन्ते उपपदे जनेर्डः स्यात् । मन्दुरजः । (१४) जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात् । (१५) उपसर्गे उपपदे जनेर्डः स्यात्संज्ञायाम् । प्रजाः

१०० अनौ[1] कर्मणि ।५।
१०१ अन्येष्वपि[2] दृश्यते।
१०२ निष्ठा[3]।
१०३ सुयजोर्ङ्वनिप्[4]।
१०४ जीर्यतेरतृन्[5]।
१०५ छन्दसि[6] लिट्।
१०६ लिटः[7] कानज्वा।
१०७ क्वसुश्च[8]।
१०८ भाषायां[9] सदवसश्रुवः।
१०९ उपेयिवाननाश्वाननूचानश्च[10]।
११० लुङ्[11]।
१११ अनद्यतने[12] लङ्।
११२ अभिज्ञावचने[13] लृट्।
११३ न यदि[14]।
११४ विभाषा[15] साकाङ्क्षे।

(१) अनुपूर्वाज्जनेः कर्मण्युपपदे डःस्यात्। पुमनुजा। (२) अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। (३) भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। स्नातं मया।
(४) सुनोतेर्यजेश्च ङ्वनिप् स्याद्भूते। सुत्वा। (५) जीर्यतेरतृन् स्याद्भूते। जरन्। (६) भूतसामान्ये छन्दसि लिट् स्यात्। अहं सूर्यमुभयतो ददर्श। (७) छन्दसि लिटः कानज्वा स्यात्। चक्राणः। (८) लिटः क्वसुरादेशो वा स्याच्छन्दसि (९) सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्, तस्य च नित्यं क्वसुः निषेदुषी। (१०) एते निपात्यन्ते। उपेयिवान्। (११) भूतार्थवृत्तेर्धातोर्लुङ् स्यात्। अभूत्। (१२) अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात्। अभवत्। (१३) स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। स्मरसि कृष्ण गोकुले वत्स्यामः। (१४) यद्योगे उक्तं न। (१५) उक्तविषये लृड्वा स्याल्लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः।

११५ परोक्षे लिट् ।
११६ हशश्वतोर्लङ् ।
११७ प्रश्ने चासन्नकाले ।
११८ लट् स्मे ।
११९ अपरोक्षे च ।
१२० ननौ पृष्टप्रतिवचने ।६।
१२१ नन्वोर्विभाषा ।
१२२ पुरि लुङ् चाऽस्मे ।
१२३ वर्तमाने लट् ।
१२४ लटः शतृशानचावप्रथमासमानाधिकरणे ।
१२५ सम्बोधने च ।
१२६ लक्षणहेत्वोः क्रियायाः ।
१२७ तौ सत् ।
१२८ पूङ्यजोः शानन् ।
१२९ ताच्छील्यवयोवचनशक्तिषु चानश् ।

(१) भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । (२) अनयोरुपपदयोर्लिङ्विषये लङ् स्यात्, चाल्लिट् । (३) आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः । (४) स्मशब्दे उपपदे भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लट् स्यात् । (५) भूतानद्यतनेऽपरोक्षे लट् स्यात्स्मयोगे । (६) ननुशब्दे उपपदे प्रश्नपूर्वके प्रतिवचने भूते लट् स्यात् । (७) नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने लट् स्याद्विभाषा । (८) पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् स्याच्चाल्लट्, न तु स्मयोगे । (९) वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । (१०) अप्रथमान्तेन सामानाधिकरण्ये सति लटः शतृशानचावादेशौ स्तः । (११) प्रथमासामानाधिकरण्येऽपि लटः शतृशानचौ स्तः सम्बोधने । (१२) क्रियायाः परिचायके हेतौ चार्थे वर्त्तमानाद्धातोर्लटः शतृशानचौ स्तः । (१३) तौ=शतृशानचौ सत्सञ्ज्ञौ स्तः। (१४) पूङो यजश्च शानन् प्रत्ययः स्याद्वर्त्तमाने । पवमानः । (१५) एषु द्योत्येषु कर्त्तरि चानश् प्रत्ययः स्यात् ।

१३० [1]ईङ्धार्योः शत्रकृच्छ्रिणि ।

१३१ [2]द्विषोऽमित्रे ।

१३२ [3]सुञो यज्ञसंयोगे ।

१३३ [4]अर्हः प्रशंसायाम् ।

१३४ [5]आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।

१३५ [6]तृन् ।

१३६ [7]अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।

१३७ [8]णेश्छन्दसि ।

१३८ [9]भुवश्च ।

१३९ [10]ग्लाजिस्थश्च ग्स्नुः ।

१४० [11]त्रसिगृधिधृषिक्षिपेः क्नुः ।

१४१ [12]शमित्यष्टाभ्यो घिनुण् ।

१४२ [13]सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवद-

भोगं भुञ्जानः । (१) आभ्यां शतृप्रत्ययः स्यादकृच्छ्रिणि कर्त्तरि । अधीयन् । (२) अमित्रे कर्त्तरि द्विषः शतृप्रत्ययः स्यात् । द्विषन् । (३) यज्ञसंयुक्तेऽभिषवे वर्त्तमानात्सुनोतेः शतृप्रत्ययः स्यात् । सर्वे सुन्वन्तः । (४) अर्हतेः शतृप्रत्ययः स्यात्प्रशंसायाम् । अर्हन् । (५) क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्त्तृषु बोध्याः । (६) धातोस्तृन् स्यात्तच्छीलादिषु कर्त्तृषु । (७) एभ्य इष्णुच् स्यात्तच्छीलादिषु कर्त्तृषु । अलङ्करिष्णुः । (८) ण्यन्ताद्धातोरिष्णुच् स्याच्छन्दसि, तच्छीलादिषु कर्त्तृषु । पारयिष्णवः । (९) भवतेश्छन्दसि इष्णुच् स्यात्तच्छीलादिषु । भविष्णुः । (१०) एभ्यो ग्स्नुप्रत्ययः स्यात् । ग्लास्नुः । (११) एभ्यः क्नुः स्यात्तच्छीलादिषु । त्रस्नुः । (१२) शमादिभ्योऽष्टाभ्यो घिनुण्स्यात्तच्छीलादिषु । शमी । (१३) एभ्यो घिनुण्स्यात्तच्छीलादिषु । सम्पर्की ।

परिदहपरिमुहदुषद्विष-
द्रुहदुहयुजाक्रीडविविच-
त्यजरजभजातिचरापच-
रामुषाभ्याहनश्च ।

१४३ वौ[1] कषलसकत्थस्रम्भः ।

१४४ अपे[2] च लषः ।

१४५ प्रे[3] लपसृद्रुमथवदवसः ।

१४६ निन्द[4]हिंसक्लिशखादवि-
नाशपरिक्षिपपरिरटपरि
वादिव्याभाषासूयो वुञ् ।

१४७ देविक्रुशोश्चोपसर्गे[5] ।

१४८ चलन[6]शब्दार्थादकर्मकाद्युच्[7] ।

१४९ अनुदात्तेतश्च[8] हलादेः ।

१५० जुचङ्क्रम्यदन्द्रम्यसृगृधि-
ज्वलशुचलषपतपदः ।

१५१ क्रुध[9]मण्डार्थेभ्यश्च ।

१५२ न[10] यः ।

१५३ सूद[11]दीपदीक्षश्च ।

१५४ लष[12]पतपदस्थाभूवृषह-
नकमगमशॄभ्य उकञ् ।

१५५ जल्प[13]भिक्षकुट्टलुण्टवृङः
षाकन् ।

(१) वाद्युपदे एभ्यो घिनुण्स्यात् । विकाषी । (२) अपे वौ चोपपदे लषेर्घिनुण् । अपलाषी । (३) प्रे उपपदे एभ्यो घिनुण् स्यात् । प्रलापी । (४) एभ्यो वुञ्स्यात्तच्छीलादिषु । निन्दकः । (५) उपसर्गे उपपदे आभ्यां वुञ्स्यात् । आदेवकः । (६) चलनार्थाच्छब्दार्थादकर्मकाच्च युच् स्यात् । चलनः । (७) हलादेर-कर्मकाद्युच् स्यात्तच्छीलादिषु कर्त्तृषु । वर्त्तनः । (८) एभ्यो युच्स्यात्तच्छीलादिषु कर्त्तृषु । जवनः । (९) एभ्यो युच्स्यात् । क्रोधनः । (१०) यकारान्ताद्युच् न स्यात् । क्नूयिता । (११) एभ्यो युच् न स्यात् । (१२) एभ्य उकञ् स्यात् । लाषुकः । (१३) एभ्यः षाकन् स्यात् । वराकः ।

१५६ प्रजोरिनिः।
१५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।
१५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्।
१५९ दाधेट्सिशदसदो रुः ॥८॥
१६० सृघस्यदः क्मरच्।
१६१ भञ्जभासमिदो घुरच्।
१६२ विदिभिदिच्छिदेः कुरच्।
१६३ इण्नशजिसर्तिभ्यः क्वरप्
१६४ गत्वरश्च।
१६५ जागरूकः।
१६६ यजजपदशां यङः।
१६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः
१६८ सनाशंसभिक्ष उः।
१६९ विन्दुरिच्छुः।
१७० क्याच्छन्दसि।

(१) प्रपूर्वाज्जवतेरिनिः स्यात्तच्छीलादिषु कर्तृषु। प्रजवी। (२) एभ्य इनिः स्यात्तच्छीलादिषु कर्तृषु। जयी। (३) एभ्य आलुच् स्यात्तच्छीलादिषु कर्तृषु। स्पृहयालुः। (४) एभ्यो रुप्रत्ययः स्यात्तच्छीलादिषु कर्तृषु। दारुः। (५) एभ्यः क्मरच् स्यात्तच्छीलादिषु कर्तृषु। घस्मरः। (६) एभ्यो घुरच् स्यात्तच्छीलादिषु कर्तृषु। भङ्गुरः। (७) एभ्यः कुरच् स्यात्तच्छीलादिषु। विदुरः। (८) एभ्यः क्वरप्स्यात्तच्छीलादिषु। इत्वरः। (९) गमेरनुनासिकलोपः क्वरप् च निपात्यते। गत्वरः। (१०) जागर्तेरूकः स्यात्। जागरूकः। (११) एभ्यो यङन्तेभ्य ऊकः स्यात्। यायजूकः। (१२) एभ्यो रः प्रत्ययः स्यात्तच्छीलादिषु। नम्रः। (१३) एभ्य उप्रत्ययः स्यात्तच्छीलादिषु। चिकीर्षुः। (१४) विदेर्नुम् इच्छत्वमुप्रत्ययश्च निपात्यते, तच्छीलादिषु। बिन्दुः।

१७१ आदृगमहनजनः किकिनौ लिट् च ।
१७२ स्वपितृषोर्नजिङ् ।
१७३ शॄवन्द्योरारुः ।
१७४ भियः क्रुक्लुकनौ ।
१७५ स्थेशभासपिसकसो वरच् ।
१७६ यश्च यङः ।
१७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।
१७८ अन्येभ्योऽपि दृश्यते ।
१७९ भुवः ।
१८० विप्रसम्भ्यो ड्वसंज्ञायाम्
१८१ धः कर्मणि ष्ट्रन् ।
१८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।
१८३ हलसूकरयोः पुवः ।
१८४ अर्तिलूधूसूखनसहचर इत्रः

(१) आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि, तौ च लिड्वत् । पपिः सोमम् । (२) आभ्यां नजिङ् स्यात्तच्छीलादिषु । स्वप्नक् । (३) आभ्यामारुः स्यात्तच्छीलादिषु । शरारुः । (४)भियः क्रुक्लुकनौ स्तस्तच्छीलादिषु । भीरुः । (५) एभ्यो वरच् स्यात्तच्छीलादिषु । स्थावर । (६) यातेर्यङन्ताद्वरच्स्यात् । यायावरः । (७) एभ्यः क्विप्स्यात्तच्छील्यादौ । विभ्राट् । (८) अन्येभ्योऽपि धातुभ्यस्ताच्छीलिकेषु क्विप् दृश्यते । छित् । (९) सञ्ज्ञायामन्तरे च गम्यमाने क्विप्स्यात् । विभूः । प्रतिभूः । (१०) एभ्यो भुवो डुः स्यान्नतु सञ्ज्ञायाम् । विभुः । (११) धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । धात्री । (१२) दाबादेःष्ट्रन् स्यात्करणेऽर्थे । दात्रम् । (१३) पूङ्पूञो. करणेऽर्थे ष्ट्रन् स्यात्, तच्चत्करणं हलसूकरयोरवयवः । पोत्रम् । (१४) एभ्य इत्रप्रत्ययः स्यात्करणे अरित्रम् ।

१८५ पुवः संज्ञायाम् ।
१८६ कर्त्तरि चर्षिदेवतयोः ।
१८७ ञीतः क्तः ।
१८८ मतिबुद्धिपूजार्थेभ्यश्च ।
[ 'कर्मणि दिवापूःसर्वसत्सुबहुलमन्येष्वपि नन्वोः शमिति भञ्जभासघःकर्मण्यष्टौ' ] ॥

(१) पवतेः करणे इत्रः स्यात्सञ्ज्ञायाम् । पवित्रम् । (२) पुव इत्रः स्यादृषौ करणे देवतायां कर्त्तरि । पवित्रम् । (३) ञीतो धातोर्वर्त्तमाने क्तप्रत्ययः स्यात् । क्ष्विण्णः । (४) मत्याद्यर्थेभ्यो धातुभ्यो वर्त्तमानेऽर्थे क्तप्रत्ययः स्यात् । राज्ञां मतः ।

*इति तृतीयाध्यस्य द्वितीयः पादः।*

## अथ तृतीयः पादः ।

१ उणादयो बहुलम् ।
२ भूतेऽपि दृश्यन्ते ।
३ भविष्यति गम्यादयः ।
४ यावत्पुरानिपातयोर्लट् ।
५ विभाषा कदाकर्ह्योः ।
६ किंवृत्ते लिप्सायाम् ।
७ लिप्स्यमानसिद्धौ च ।

अथ तृतीयाध्यायस्य तृतीयः पादः।

(५) एते वर्तमाने सञ्ज्ञायाञ्च बहुलं स्युः । (६) उणादयो भूतेऽपि काले क्वचिद् दृश्यन्ते । (७) गम्यादयो भविष्यति काले साधवः । (८) अनयोरुपपदयो भविष्यति काले धातोर्लट् स्यात् । (९) भविष्यति लङ् वा स्यात् । (१०) अत्र भविष्यति लड्वा स्यात् । (११) लिप्स्यमानेनाऽन्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड्वा ।

८ लोडर्थलक्षणे च ।
९ लिङ् चोर्ध्वमौहूर्तिके ।
१० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।
११ भाववचनाश्च ।
१२ अण् कर्मणि च ।
१३ लृट् शेषे च ।
१४ लृटः सद्वा ।
१५ अनद्यतने लुट् ।
१६ पदरुजविशस्पृशो घञ् ।
१७ सृ स्थिरे ।
१८ भावे ।
१९ अकर्तरि च कारके संज्ञायाम् ।
२० परिमाणाख्यायां सर्वेभ्यः ।१।
२१ इङश्च ।
२२ उपसर्गे रुवः ।

(१) लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातोर्भविष्यति लड्वा स्यात् । ( ) ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्त्तमानाद्धातोर्लिङ्लटौ वा स्तः । (३) क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्त । (४) 'भावे'इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः । (५) कर्मण्युपपदे क्रियार्थायां क्रियायां चाऽण् स्यात् । (६) भविष्यत्यर्थाद्धातोर्लृट् स्यात् (७) लृटः शतृशानचौ वा स्त (८) अनद्यतभूतार्थवृत्तेर्धातोर्लुट् स्यात् (९) एभ्यो घञ् स्यात् ( ) ...नैः स्थिरे कर्तरि घञ् स्यात् । (११) सिद्धावस्थापन्नो धात्वर्थो भाव... वाच्ये धातोर्घञ् । (१२) कर्तृभिन्ने कारके घञ् स्यात्संज्ञायाम् । (१३ परिमाणाख्यायां सर्वेभ्यो धातुभ्यो घञ् स्यात् । (१४) इङो घञ् स्यात् । (१५) उपसर्गे उपपदे रुवो घञ् स्यात् ।

२३ [1]समि युद्रुदुवः ।
२४ [2]श्रिणीभुवोऽनुपसर्गे ।
२५ वौ [3]क्षुश्रुवः ।
२६ [4]अवोदोर्नियः ।
२७ प्रे [5]द्रुस्तुस्रुवः ।
२८ [6]निरभ्योः पूल्वोः ।
२९ [7]उन्न्योर्ग्रः ।
३० [8]कॄ धान्ये ।
३१ [9]यज्ञे समि स्तुवः ।
३२ [10]प्रे स्त्रोऽयज्ञे ।
३३ [11]प्रथने वावशब्दे ।
३४ [12]छन्दोनाम्नि च ।
३५ [13]उदि ग्रहः ।
३६ [14]समि मुष्टौ ।
३७ [15]परिन्योर्नीणोर्द्यूताभ्रेषयोः ।
३८ [16]परावनुपात्यय इणः ।
३९ [17]व्युपयोः शेतेः पर्याये ।
४० [18]हस्तादाने चेरस्तेये ॥२॥

(१) सम्पूर्वेभ्य एभ्यो घञ् । (२) अनुपसर्गेभ्य एभ्यो घञ् । (३) विपूर्वाभ्यामाभ्यां घञ् स्यात् । (४) अनयोरुपपदयोः नियो घञ् । (५) प्रोपपदेभ्य एभ्यो घञ् । (६) अनयोरुपपदयोराभ्यां घञ् स्यात् । (७) उन्न्योरुपपदयोर्गृणातेर्घञ् । (८) कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । (९) समि उपपदे स्तुधातोर्घञ्स्यात् यज्ञे । (१०) विपूर्वात्स्तृणातेर्घञ्स्यादयज्ञे । (११) विपूर्वात्स्तृणातेर्घञ् स्यात्-अशब्दविषये प्रथने । (१२) विपूर्वात्स्तृणातेर्घञ्स्याच्छन्दोनाम्नि । (१३) उत्पूर्वाद्ग्रहेर्घञ्स्यात् । (१४) सम्पूर्वाद्ग्रहेर्घञ्स्यान्मुष्टौ । (१५) परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये । (१६) परिपूर्वादिणो घञ् स्यात्क्रमप्राप्तस्याऽनतिपाते । (१७) व्युपपूर्वाच्छेतेर्घञ्स्यात्पर्याये । (१८) आदेयस्य प्रत्यासत्तौ गम्यमानायां चिनोतेर्घञ्स्यादस्तेये ।

४१ निवासचितिशरीरोपससमाधानेष्वादेश्च कः।
४२ सङ्घे चानौत्तराधर्ये।
४३ कर्मव्यतिहारे णच् स्त्रियाम्।
४४ अभिविधौ भाव इनुण्।
४५ आक्रोशेऽवन्योर्ग्रहः।
४६ प्रे लिप्सायाम्।
४७ परौ यज्ञे।
४८ नौ वृ धान्ये।
४९ उदि श्रयतियौतिपूद्रुवः।
५० विभाषाऽऽङि रुप्लुवोः।
५१ अवे ग्रहो वर्षप्रतिबन्धे।
५२ प्रे वणिजाम्।
५३ रश्मौ च।
५४ वृणोतेराच्छादने।
५५ परौ भुवोऽवज्ञाने।
५६ एरच्।
५७ ऋदोरप्।

(१) एषु चिनोतेर्घञ् स्यात्, आदेश्च ककारः। (२) सङ्घे चानौत्तराधर्ये चेर्घञ् आदेश्च कः। (३) कर्मव्यतिहारे गम्ये स्त्रीलिङ्गे भावे णच्—स्यात्। (४) भावे इनुण् स्यादभिविधौ। (५) अव नि एतयोर्ग्रहेर्घञ् स्याच्छापे। (६) प्रपूर्वाद्ग्रहेर्घञ्स्याल्लिप्सायाम्। (७) परिपूर्वाद्ग्रहेर्घञ्स्यात् यज्ञे। (८) निपूर्वाद्वृञो घञ् भावादौ। (९) उदि उपपदे एभ्यो घञ्। (१०) आङि उपपदे आभ्यां घञ् स्याद्वा। (११) अवपूर्वाद्ग्रहेर्घञ् स्याद्वा वर्षप्रतिबन्धे। (१२) प्रे ग्रहेर्घञ् वा, वणिजां सम्बन्धि चेत्प्रत्ययार्थः (१३) रश्मावभिधेये प्रे ग्रहेर्घञ् स्याद्वा। (१४) प्रपूर्वाद्वृणोतेर्घञ् वा स्यादाच्छादने। (१५) परिपूर्वाद्भुवो घञ्स्याद्वाऽवज्ञाने। (१६) इवर्णान्तादच्स्यात्। (१७) ऋवर्णान्तादुवर्णान्तादप् स्यात्।

५८ [1]ग्रहवृदृनिश्चिगमश्च ।
५९ [2]उपसर्गेऽदः ।
६० नौ [3]ण च ॥३॥
६१ [4]व्यधजपोरनुपसर्गे ।
६२ [5]स्वनहसोर्वा ।
६३ [6]यमः समुपनिविषु च ।
६४ नौ [7]गदनदपठस्वनः ।
६५ [8]क्वणो वीणायां च ।
६६ [9]नित्यं पणः परिमाणे ।
६७ [10]मदोऽनुपसर्गे ।
६८ [11]प्रमदसंमदौ हर्षे ।
६९ [12]समुदोरजः पशुषु ।
७० [13]अक्षेषु ग्लहः ।
७१ [14]प्रजने सर्तेः ।
७२ ह्वः संप्रसा[15]रणं च न्यभ्युपविषु ।
७३ [16]आङि युद्धे ।
७४ नि[17]पानमाहावः ।
७५ [18]भावेऽनुपसर्गस्य ।

(१) एभ्योऽप् स्यात् । (२) उपसर्गपूर्वाददेरप्स्यात् । (३) नावुपपदे अदेर्णः स्यादप् च । (४) अनुपसृष्टाभ्यामाभ्यामप् स्यात् । (५) आभ्यामप् स्याद्वा । (६) एषु अनुपसर्गे च यमेरप् वा स्यात् । (७) नावुपपदे एभ्योऽप् वा स्यात् । (८) नावनुपसर्गे च वीणाविषयाच्चक्वणतेरप् वा स्यात् । (९) पणतेः परिमाणे नित्यमप् स्यात् । (१०) अनुपसर्गे सुप्युपपदे मदो नित्यमप् स्याद्भावादौ ।

(११) हर्षे एतौ निपात्येते । (१२) सम्पूर्वोऽजिः समुदाये, उत्पूर्वश्च प्रेरणे, तस्मात्पशुविषयकादप् स्यात् । (१३) देवने यत्पणरूपेण ग्राह्यं तत्र 'ग्लह' इति निपात्यते । (१४) प्रथमगर्भग्रहणे सर्तेरप्स्यात् । (१५) एतत्पूर्वात् ह्वयतेरप्स्यात्सम्प्रसारणञ्च । (१६) आङ्पूर्वात् ह्वयतेरप्स्यात्सम्प्रसारणञ्च युद्धे । (१७) आङ्पूर्वस्य ह्वयतेः सम्प्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । (१८) अनुपसर्गस्य ह्वयतेः

७६ हनश्च वधः[1] ।
७७ मूर्तौ घनः[2] ।
७८ अन्तर्घनो देशे[3] ।
७९ अगारैकदेशे प्रघणः प्रघाणश्च[4] ।
८० उद्घनोऽत्याधानम्[5] ॥४॥
८१ अपघनोऽङ्गम्[6] ।
८२ करणेऽयोविद्रुषु[7] ।
८३ स्तम्बे क च[8] ।
८४ परौ घः[9] ।
८५ उपघ्न आश्रये[10] ।
८६ सङ्घोद्घौ गणप्रशंसयोः[11] ।
८७ निघो निमितम्[12] ।
८८ ड्वितः क्त्रिः[13] ।
८९ ट्वितोऽथुच्[14] ।
९० यजयाचयतविच्छप्रच्छरक्षो नङ्[15] ।
९१ स्वपो नन्[16] ।

सम्प्रसारणमप् च स्याद्भावे ।(१) अनुपसर्गाद्धन्तर्भावेऽप् स्यात्, वधादेशश्चान्तोदात्तः । (२) मूर्तिः=काठिन्यं, तस्मिन्नभिधेये हन्तेरप् स्यात् । (३) अन्तःपूर्वाद्धन्तेरप् प्रत्ययः स्याद्घनादेशश्च देशेऽभिधेये । (४) प्रपूर्वस्य हन्तेरेतौ निपात्येते अगारैकदेशेऽभिधेये । (५) उत्पूर्वस्य हन्तेः—'उद्घन' इति निपात्यतेऽत्याधाने । (६) अपपूर्वस्य हन्तेरपघन इति निपात्यतेऽङ्गं चेत्तद्भवति । (७) एषु हन्तेः करणेऽप् स्याद्घनादेशश्च । (८) स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च, पक्षे घनादेशश्च । (९) परौ हन्तेरप् स्यात् करणे घशब्दश्चादेशः । (१०) उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च । (११) एतौ निपात्येते गणे प्रशंसायाञ्च । (१२) 'निघ' इति निपात्यते, समारोहपरिणाहेऽर्थे । (१३) ड्वितो धातोः क्त्रिः स्याद्भावादौ । (१४) ट्वितो धातोरथुच्स्याद्भावादौ । (१५) यजादिभ्यो नङ् स्याद्भावादौ । (१६) स्वपेर्नन् प्रत्ययः स्यात् भावादौ ।

९२ उपसर्गे घोः किः ।
९३ कर्मण्यधिकरणे च ।
९४ स्त्रियां क्तिन् ।
९५ स्थागापापचो भावे ।
९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।
९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ।
९८ व्रजयजोर्भावे क्यप् ।
९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ।
१०० कृञः श च ॥५॥
१०१ इच्छा ।
१०२ अ प्रत्ययात् ।
१०३ गुरोश्च हलः ।
१०४ षिद्भिदादिभ्योऽङ् ।
१०५ चिन्तिपूजिकथिकुम्बिचर्चश्च ।

(१) उपसर्गे उपपदे घुसंज्ञकेभ्यो धातुभ्यः किप्रत्ययः स्यात्, भावादौ । (२) कर्मण्युपपदे घोः कि स्यादधिकरणेऽर्थे । (३) स्त्रीलिङ्गे भावे क्तिन् स्यात् । (४) स्थादिभ्यः स्त्रीलिङ्गे भावे क्तिन् स्यात् । (५) वृषादिभ्यः स्त्रियां भावे क्तिन् स्यात्स चोदात्तो मन्त्रेऽभिधेये । (६) एते शब्दा निपात्यन्ते । (७) व्रजयजोः स्त्रीलिङ्गे भावे क्तिन् स्यात्स चोदात्तः । (८) समजादिभ्यः स्त्रियां भावादौ च क्यप्स्यात्स चोदात्तः संज्ञायाम् । (९) योगविभागोऽत्र कार्यः । कृञः । करोतेः स्त्रियां क्यप्प्रत्ययः स्यात् । श च । कृञः शः स्याच्चात्क्यप् ।

(१०) इषेर्भावे शो यगभावश्च निपात्यते। (११)प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात्। (१२) गुरुमतो हलन्तात्स्त्रियामकारः स्यात् । (१३) षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ्। (१४) एभ्यः स्त्रियामङ् स्यात् ।

१०६ आतश्चोपसर्गे[1] ।
१०७ ण्यासश्रन्थो युच्[2] ।
१०८ रोगाख्यायां[3] ण्वुल् बहुलम् ।
१०९ संज्ञायाम्[4] ।
११० विभाषाऽऽख्यानपरिप्रश्न-[5]योरिञ्च ।
१११ पर्यायाऽर्हणोत्पत्तिषु ण्वुच्[6] ।
११२ आक्रोशे नञ्यनिः[7] ।
११३ कृत्यल्युटो बहुलम्[8] ।
११४ नपुंसके भावे क्तः[9] ।
११५ ल्युट् च[10] ।
११६ कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्[11] ।
११७ करणाधिकरणयोश्च[12] ।
११८ पुंसि संज्ञायां घः प्रायेण[13] ।
११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च[14] ।
१२० अवे तॄस्त्रोर्घञ्[15] ।

(१) आकारान्तेभ्य उपसर्गे उपपदे स्त्रियामङ् स्यात् । (२) एभ्यः स्त्रियां युच्स्यात् । (३) धातोर्ण्वुल्स्याद् बहुलं, रोगाख्यायाम् । (४) संज्ञायां विषये धातोर्ण्वुल् । (५) परिप्रश्ने आख्याने च गम्ये इञ् स्यात्, चात्-ण्वुल् । (६) पर्यायादिषु द्योत्येषु ण्वुच् वा (७) नञि उपपदेऽनिः स्यादाक्रोशे गम्ये । (८) कृत्यसञ्ज्ञकाः प्रत्यया ल्युट् च बहुलं भवन्ति । यत्र विहितास्ततोऽन्यत्रापि भवन्तीति यावत् ।

(९) नपुंसके भाव धातोः क्तः स्यात् । (१०) धातोर्ल्युट् स्यान्नपुंसके भावे । (११) येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्ल्युट् स्यान्नपुंसके भावे । (१२) करणेऽधिकरणे च धातोर्ल्युट् स्यात् । (१३) करणेऽधिकरणे च धातोर्घः स्यात्पुंसि सञ्ज्ञायाम् । (१४) एते घप्रत्ययान्ता निपात्यन्ते । (१५) अवपूर्वात्तरतेः स्तृणातेश्च करणाधिकरणयोर्घप्रत्ययः स्यात्सञ्ज्ञायाम् ।

१२१ हलश्च[1] ।

१२२ अध्यायन्यायोद्यावसंहाराश्च[2] ।

१२३ उदङ्कोऽनुदके[3] ।

१२४ जालमानायः[4] ।

१२५ खनो घ च[5] ।

१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्[6] ।

१२७ कर्तृकर्मणोश्च भूकृञोः[7] ।

१२८ आतो युच्[8] ।

१२९ छन्दसि गत्यर्थेभ्यः[9] ।

१३० अन्येभ्योऽपि दृश्यते[10] ।

१३१ वर्तमानसामीप्ये वर्तमानवद्वा[11] ।

१३२ आशंसायां भूतवच्च[12] ।

१३३ क्षिप्रवचने लृट्[13] ।

१३४ आशंसावचने लिङ्[14] ।

(१) करणेऽधिकरण च हलन्ताद्घञ् स्यात् पुंसि सञ्ज्ञायाम्। (२) एते घञन्ता निपात्यन्त । (३) उत्पूर्वादञ्चतेर्घञ् स्यात्, न तूदके । (४) आङ्पूर्वान्नयतेः करणे घञ्, जालेऽभिधेये । (५) खनः करणाधिकरणयोर्घप्रत्ययः स्यात्, चात् घञ् । (६) एषुः दुःखसुखार्थेषूपपदेषु धातोः खल् । (७) कर्तृकर्मणोरीषदादिषु च उपपदेषु भूकृञोः खल् स्यात । (८) ईषदादिषूपपदेषु आदन्तेभ्यो युच स्यात् । (९) ईषदादिपूपपदेषु गत्यर्थेभ्यश्छन्दसि युच्स्यात् । (१०) अन्येभ्योऽपि धातुभ्यश्छन्दसि युच्स्यात् । (११) 'वर्त्तमाने लट्' इत्यारभ्य 'उणादयो बहुल'मिति यावत् येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्त्तमानसमीपे भूते भविष्यति च वा स्युः । (१२) भविष्यति काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसायाम् । (१३) क्षिप्रपर्याये उपपदे आशंसायां लृट् स्यात । (१४) आशंसावाचिन्युपपदे भविष्यति लिङ्-

१३५ [१]नाऽनद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ।

१३६ [२]भविष्यति मर्यादावचनेऽवरस्मिन् ।

१३७ [३]कालविभागे चाऽनहोरात्राणाम् ।

१३८ [४]परस्मिन् विभाषा ।

१३९ [५]लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ ।

१४० [६]भूते च ।

१४१ वोताप्योः ।

१४२ गर्हायां लडपिजात्वोः ।

१४३ विभाषा कथमि लिङ् च ।

१४४ किंवृत्ते लिङ्लृटौ ।

१४५ [११]अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।

स्यान्न तु भूतवत् । (१) क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न स्तः । (२) भविष्यति काले मर्यादोक्तावरस्मिन्प्रविभागेऽद्यतनवन्न । (३) कालमर्यादाविभागे सत्यवरस्मिन्प्रविभागे भविष्यति कालेऽनद्यतनवन्न स्यात्, स चेत्कालविभागोऽहोरात्रसम्बन्धी न भवेत् । (४) कालमर्यादाविभागे सति भविष्यति काले परस्मिन्प्रविभागे विभाषाऽनद्यतनवन्न, न चेदहोरात्रसम्बन्धी प्रविभागः । (५) हेतुहेतुमद्भावादौ लिङ्निमित्ते भविष्यति काले लृङ् स्यात्क्रियातिपत्तौ गम्यमानायाम् । (६) लिङ्निमित्ते लृङ् स्याद्भूते भविष्यति च । (७) 'उताप्योः–' इत्यतः प्राक् भूते 'लिङ्निमित्ते लृङ् वे'त्यधिक्रियते । (८) आभ्यां योगे लट् स्यात्कालत्रये गर्हायाम् । (९) कथंशब्दे उपपदे कालत्रये लिङ् स्याद्गर्हायाम् । (१०) किंवृत्ते उपपदे धातोर्लिङ्लृटौ स्तो गर्हायाम् । (११) किंवृत्तेऽकिंवृत्ते चोपपदे धातोर्लिङ्लृटौ स्तोऽनवक्लृप्त्यमर्षयोः ।

१४६ किंकिलास्त्यर्थेषु लृट् ।
१४७ जातुयदोर्लिङ् ।
१४८ यच्चयत्रयोः ।
१४९ गर्हायां च ।
१५० चित्रीकरणे च ।
१५१ शेषे लृडयदौ ।
१५२ उताप्योः समर्थयोर्लिङ् ।
१५३ कामप्रवेदनेऽकच्चिति ।
१५४ संभावनेऽलमिति चेत्सिद्धाप्रयोगे ।
१५५ विभाषा धातौ संभावनवचनेऽयदि ।
१५६ हेतुहेतुमतोर्लिङ् ।
१५७ इच्छार्थेषु लिङ्लोटौ ।
१५८ समानकर्तृकेषु तुमुन् ।
१५९ लिङ् च ।
१६० इच्छार्थेभ्यो विभाषा वर्तमाने ।

(१) किङ्किलाऽस्त्यर्थेषूपपदेषु धातोर्लृट्, अनवक्लृप्त्यमर्षयोः। (२) अनयोरुपपदयोर्धातोर्लिङ् स्यादनवक्लृप्त्यमर्षयोः। (३) अनयोर्योगे धातोर्लिङ् स्यादनवक्लृप्त्यमर्षयोः । (४) यच्च यत्रयोर्योगे गर्हायां च लिङ् स्यात् । (५) यच्चयत्रयोर्योगे धातोर्लिङ् स्यादाश्चर्ये । (६) यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् । (७) समानार्थयोरुताप्योर्योगे धातोर्लिङ् । (८) स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति । (९) सम्भावनेऽर्थे लिङ् स्याच्चेत्सम्भावनम्—अलमिति सिद्धाऽप्रयोगे सति । (१०) सम्भावनाऽर्थके धातावुपपदे उक्तेऽर्थे लिङ् वा स्यान्न तु यच्छब्दे । (११) हेतौ हेतुमति चार्थे वर्तमानाद्धातोर्लिङ्स्याद्भविष्यति (१२) इच्छार्थेषु धातुषूपपदेषु धातोर्लिङ्लोटौ स्तः । (१३) इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । (१४) समानकर्तृकेषु इच्छार्थेषूपपदेषु लिङ् स्यात् । (१५) इच्छार्थेभ्यो वर्त्तमाने लिङ् स्याद्विभाषा, पक्षे लट् ।

१६१ विधिनिमन्त्रणामन्त्रणाऽधीष्टसंप्रश्नप्रार्थनेषु लिङ्।[1]
१६२ लोट् च।[2]
१६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च।[3]
१६४ लिङ् चोर्ध्वमौहूर्तिके।[4]
१६५ स्मे लोट्।[5]
१६६ अधीष्टे च।[6]
१६७ कालसमयवेलासु तुमुन्।[7]
१६८ लिङ्यदि।[8]
१६९ अर्हे कृत्यतृचश्च।[9]
१७० आवश्यकाधमर्ण्ययोर्णिनिः।[10]
१७१ कृत्याश्च।[11]
१७२ शकि लिङ् च।[12]
१७३ आशिषि लिङ्लोटौ।[13]
१७४ क्तिच्क्तौ च संज्ञायाम्।[14]

(१) एष्वर्थेषु द्योत्येषु वाच्येषु वा धातोर्लिङ् स्यात्। (२) विध्यादिष्वर्थेषु धातोर्लोट् स्यात्। (३) एष्वर्थेषु कृत्यसञ्ज्ञकाः प्रत्ययाः स्युः। चाल्लोट्। (४) प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्तमानाद्धातोर्लिङ् स्यात्, चाद्यथाप्राप्तम्। (५) स्मशब्दे उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्त्तमानाद्धातोर्लोट् स्यात्। (६) स्मेशब्दे उपपदे अधीष्टे गम्यमाने धातोर्लोट् स्यात्।

(७) कालार्थेषु उपपदेषु तुमुन् स्यात्। (८) यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात्। (९) अर्हे कर्त्तरि धातोः कृत्यतृचः स्युः। (१०) अवश्यंभावविशिष्टे आधमर्ण्यविशिष्टे च कर्त्तरि वाच्ये धातोर्णिनिः स्यात्। (११) आवश्यकाधमर्ण्ययोर्धातोः कृत्याः स्युः। (१२) शक्तौ लिङ् स्यात् चात्कृत्याः। (१३) आशिषि लिङ्लोटौ स्तः। (१४) धातोः क्तिच् क्तश्च स्यादाशिषि सञ्ज्ञायाम्।

१७५ माङि लुङ् ।

१७६ स्मोत्तरे लङ् च ।

['उणादय इको निवासव्यधजपोरपघन इच्छा हलश्च वोताप्योर्विधिषोडश'] ॥

अथ चतुर्थः पादः ।

१ धातुसम्बन्धे प्रत्ययाः ।

२ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ।

३ समुच्चयेऽन्यतरस्याम् ।

४ यथाविध्यनुप्रयोगः पूर्वस्मिन्

५ समुच्चये सामान्यवचनस्य ।

६ छन्दसि लुङ्लङ्लिटः ।

७ लिङर्थे लेट् ।

८ उपसंवादाशङ्कयोश्च ।

९ तुमर्थे सेसेनसे असेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ।

(१) माङ्युपपदे धातोर्लुङ् स्यात् । (२) स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ।

इति तृतीयाध्यायस्य तृतीयः पादः

(३) धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । (४) पौनः पुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्तस्य च हिस्वौ स्तः । (५) अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा । (६) आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः । (७) समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । (८) धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः । (९) विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि । (१०) पणवन्धे आशंकायां च लेट् स्यात् । (११) तुमर्थे एते प्रत्ययाः स्युश्छन्दसि ।

१० प्रयै रोहिष्यै अव्यथिष्यै ।
११ दृशे विख्ये च ।
१२ शकि णमुल्कमुलौ ।
१३ ईश्वरे तोसुन्कसुनौ ।
१४ कृत्यार्थे तवैकेन्केन्यत्वनः ।
१५ अवचक्षे च ।
१६ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।
१७ सृपितृदोः कसुन् ।
१८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ।
१९ उदीचां माङो व्यतीहारे ।
२० परावरयोगे च ॥ १ ॥
२१ समानकर्तृकयोः पूर्वकाले ।
२२ आभीक्ष्ण्ये णमुल् च ।
२३ न यद्यनाकाङ्क्षे ।

(१) एते तुमर्थे निपात्यन्ते छन्दसि । (२) तुमर्थे एतौ निपात्येते । (३) शकोतावुपपदे तुमर्थे एतौ स्तश्छन्दसि । (४) ईश्वरे उपपदे धातोरेतौ स्तः । (५) भावकर्मणोरेते स्युः । (६) अवपूर्वाच्चक्षिङ एश्प्रत्ययो निपात्यते छन्दसि । (७) भावो लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानेभ्यः स्थादिभ्यस्तुमर्थे तोसुन् प्रत्ययः स्याच्छन्दसि । अवधित्वेन लक्षणं भावः । (८) भावलक्षणेऽर्थे वर्त्तमानयोः सृपितृदोस्तुमर्थे कसुन् स्याच्छन्दसि । (९) प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । (१०) व्यतिहारेर्थे माङः क्त्वा स्यात् । (११) परेण पूर्वस्याऽपरेण परस्य योगे गम्ये धातोः क्त्वा स्यात् । (१२) समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । (१३) पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च । (१४) यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न, यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षते चेत् ।

२४ विभाषाऽग्रेप्रथमपूर्वेषु ।
२५ कर्मण्याक्रोशे कृञः खमुञ् ।
२६ स्वादुमि णमुल् ।
२७ अन्यथैवंकथमित्थंसु सिद्धाऽप्रयोगश्चेत् ।
२८ यथातथयोरसूयाप्रतिवचने
२९ कर्मणि दृशिविदोः साकल्ये
३० यावति विन्दजीवोः ।
३१ चर्मोदरयोः पूरेः ।
३२ वर्षप्रमाण ऊलोपश्चास्याऽन्यतरस्याम् ।
३३ चेले क्नोपेः ।
३४ निमूलसमूलयोः कषः ।
३५ शुष्कचूर्णरूक्षेषु पिषः ।
३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ।
३७ करणे हनः ।

(१) एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा । (२) कर्मणि उपपदे आक्रोश गम्ये खमुञ् स्यात् । (३) स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः । (४) एषु कृञो णमुल् स्यात्, सिद्धः अप्रयोगोऽस्य एवंभूतश्चेत् कृञ् । (५) यथातथयोरुपपदयोः कृञो णमुल्स्यात्, सिद्धाऽप्रयोगश्चेत् कृञ् । असूयया प्रतिवचने । (६) कर्मण्युपपदे णमुल् स्यात् । (७) यावत्युपपदे विन्दजीवोर्णमुल् । (८) अनयोः कर्मणो रुपपदयोः पूरेर्णमुल् । (९) कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा, समुदायेन वर्षप्रमाणे गम्ये । (१०) चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद्वर्षप्रमाणे गम्ये । (११) अनयोः कर्मणोरुपपदयोः कषेर्णमुल् । (१२) एषु कर्मसूपपदेषु पिषेर्णमुल् । (१३) कर्मसञ्ज्ञकेषु समूलादिपूपपदेषु हनादेर्णमुल् । (१४) करणे उपपदे हन्तेर्णमुल् ।

३८ स्नेहने पिषः ।
३९ हस्ते वर्त्तिग्रहोः ।
४० स्वे पुषः ॥२॥
४१ अधिकरणे बन्धः ।
४२ संज्ञायाम् ।
४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।
४४ ऊर्ध्वे शुषिपूरोः ।
४५ उपमाने कर्मणि च ।
४६ कषादिषु यथाविध्यनुप्रयोगः ।
४७ उपदंशस्तृतीयायाम् ।
४८ हिंसार्थानां च समानकर्मकाणाम् ।
४९ सप्तम्यां चोपपीडरुधकर्षः ।
५० समासत्तौ ।
५१ प्रमाणे च ।

(१) स्निह्यते येन तत् स्नेहनं, तस्मिन् करणे पिषेर्णमुल् । (२) हस्तार्थे करणे उपपदे वर्त्तिग्रहोर्णमुल् । (३) स्वशब्दे तत्पर्याये तद्विशेषे च करणे उपपदे पुषेर्णमुल् । (४) अधिकरणे उपपदे बन्धेर्णमुल्स्यात् । (५) बध्नातेर्णमुल् स्यात्संज्ञायाम् । (६) जीवपुरुषयोः कर्मणोरुपपदयोर्नशिवहोर्णमुल्स्यात् । (७) ऊर्ध्वे कर्त्तरि अनयोर्णमुल्स्यात् । (८) उपमाने कर्मणि कर्त्तरि चोपपदे धातोर्णमुल्स्यात् ।

(९) 'निमूलसमूलयोः कष' इत्यत आरभ्य कषादिषु यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्यः । (१०) तृतीयान्ते उपपदे उपपूर्वाद्दंशेर्णमुल्स्यात्पूर्वकाले । (११) तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्तृकाद्धिंसार्थाण्णमुल् । (१२) उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल्स्यात् । (१३) तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने । (१४) तृतीयासप्तम्योरुपपदयोर्धातोर्णमुल्स्यात्प्रमाणे गम्ये ।

५२ अपादाने परीप्सायाम् ।
५३ द्वितीयायां च ।
५४ स्वाङ्गेऽध्रुवे ।
५५ परिक्लिश्यमाने च ।
५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।
५७ अस्यतितृषोः क्रियान्तरे कालेषु ।
५८ नाम्न्यादिशिग्रहोः ।
५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।
६० तिर्यच्यपवर्गे ॥३॥
६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः ।
६२ नाधाऽर्थप्रत्यये च्व्यर्थे ।
६३ तूष्णीमि भुवः ।
६४ अन्वच्यानुलोम्ये ।
६५ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।

(१) अपादाने उपपदे त्वरायां गम्यमानायां धातोर्णमुल् । (२) द्वितीयान्ते उपपदे त्वरायां गम्यमानायां धातोर्णमुल्स्यात् । (३) अध्रुवे स्वाङ्गे द्वितीयान्ते उपपदे धातोर्णमुल्स्यात् । (४) सर्वतो विबाध्यमाने स्वाङ्ग द्वितीयान्ते णमुल्स्यात् । (५) द्वितीयान्ते उपपदे विशयादिभ्यो णमुल्स्याद्व्याप्यमाने आसेव्यमाने चार्थे गम्ये । (६) क्रियाव्यवधायके धात्वर्थे-वर्त्तमानादस्यतेस्तृपेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल्स्यात् । (७) द्वितीयान्ते नाम्नि उपपदेऽनयोर्णमुल्स्यात् । (८) अयथाऽभिप्रेताख्याने—अव्यये उपपदे कृञः क्त्वाणमुलौ स्तः । (९) तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः । (१०) तस्प्रत्ययान्ते स्वाङ्गवाचिनि उपपदे कृस्वोर्णमुल्स्यात् । (११) नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः (१२) तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः । (१३) अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्तः। (१४) एषूपपदेषु धातोस्तुमुन्स्यात् । शक्नोति भोक्तुम् ।

६६ पर्याप्तिवचनेष्वलमर्थेषु ।
६७ कर्तरि कृत् ।
६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा
६९ लः कर्मणि च भावे चाऽकर्मकेभ्यः ।
७० तयोरेव कृत्यक्तखलर्थाः ।
७१ आदिकर्मणि क्तः कर्तरि च
७२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ।
७३ दाशगोघ्नौ सम्प्रदाने ।
७४ भीमादयोऽपादाने ।
७५ ताभ्यामन्यत्रोणादयः ।
७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।
७७ लस्य ।
७८ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ।

(१) पूर्णतावाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् । पर्याप्तो भोक्तुम् । (२) कृत्प्रत्ययः कर्त्तरि स्यात् । (३) एते कृत्यप्रत्ययान्ताः कर्त्तरि वा निपात्यन्ते । (४) लकाराः सकर्मकेभ्यः कर्मणि कर्त्तरि च स्युरकर्मकेभ्यो भावे कर्त्तरि च । (५) एते भावकर्मणोरेव स्युः । (६) आदिकर्मणि यः क्तः स कर्त्तरि स्यात्, चाद्भावकर्मणोः । प्रस्वेदितश्चैत्रः । (७) ... कर्त्तरि क्तः स्याद्भावकर्मणोश्च । गङ्गां गतः । (८) एतौ निपात्येते सम्प्रदाने । दाशः । (९) एतेऽपादाने निपात्यन्ते । भीमः (१०) सम्प्रदानापादानाभ्यामन्य... युगादयो भवन्ति । तन्तुः । (११) ...ऽधिकरणे क्तः स्याच्चाद्यथाप्राप्तम् मुकुन्दस्यासितम् । (१२) ...ारोऽयम् । (१३) एतेऽष्टादश ...शाः स्युः ।

७९ टित आत्मनेपदानां टेरे ।
८० थासः से ।
८१ लिटस्तझयोरेशिरेच् ।
८२ परस्मैपदानां णलतुसुस्थल-
थुसणल्वमाः ।
८३ विदो लटो वा ।
८४ ब्रुवः पञ्चानामादित आहो-
ब्रुवः ।
८५ लोटो लङ्वत् ।
८६ एरुः ।
८७ सेर्ह्यपिच्च ।
८८ वा छन्दसि ।
८९ मेर्निः ।
९० आमेतः ।
९१ सवाभ्यां वामौ ।
९२ आडुत्तमस्य पिच्च ।
९३ एत ऐ ।
९४ लेटोऽडाटौ ।
९५ आत ऐ ।

(१) टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । (२) टितो लस्य थासः 'से' स्यात् । (३) लिडादेशयोस्तझयोरेश्इरेच् इत्येतावादेशौ स्तः । (४) लिटस्तिबादीनां नवानां णलादयो नव क्रमात्स्युः । (५) वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । (६) ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः—पञ्च वा स्युर्ब्रुवश्चाहादेशः । (७) लोटो लङ इव कार्यं स्यात् । (८) लोट इ कारस्य उः स्यात् । (९) लोटः सेर्हिः स्यात्सोऽपिच्च । (१०) लोटः सेर्हिरपिद्वा-छन्दसि (११) लोटो मेर्निः स्यात् । (१२) लोट एकारस्याम् स्यात् । (१३) सवाभ्याम्परस्य लोडेतः क्रमाद्वामौ स्तः । (१४) लोडुत्तमस्याडागमः स्यात्स पिच्च । (१५) लोडुत्तमस्य एत ऐ स्यात् । (१६) लेटः अट् आट् आगमौ स्तस्तौ च पितौ । (१७) लेट् आकारस्य ऐ स्यात् ।

९६ वैतोऽन्यत्र[1] ।
९७ इतश्च लोपः परस्मैपदेषु[2] ।
९८ स उत्तमस्य[3] ।
९९ नित्यं ङितः[4] ।
१०० इतश्च[5] ॥ ५ ॥
१०१ तस्थस्थमिपां तान्तन्तामः[6] ।
१०२ लिङः सीयुट्[7] ।
१०३ यासुट् परस्मैपदेषूदात्तो ङिच्च[8] ।
१०४ किदाशिषि[9] ।
१०५ झस्य रन्[10] ।
१०६ इटोऽत्[11] ।
१०७ सुट् तिथोः[12] ।
१०८ झेर्जुस्[13] ।
१०९ सिजभ्यस्तविदिभ्यश्च[14] ।
११० आतः[15] ।
१११ लङः शाकटायनस्यैव[16] ।
११२ द्विषश्च[17] ।

(१) लेट एकारस्य ऐ स्याद्वा, 'आत ऐ' इत्यस्य विषयं विना (२) लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु (३) लेडुत्तमसकारस्य लोपो वा स्यात् । (४) सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । (५) ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः स्यात् । (६) ङितश्चतुर्णां तामादयः क्रमात्स्युः । (७) लिङः सीयुडागमः स्यात् । (८) लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च । (९) आशिषि लिङो यासुट् कित्स्यात् । (१०) लिङो झस्य रन् स्यात् । (११) लिङादेशस्य इटोऽत्स्यात् । (१२) लिङस्तकारथकारयोः सुट् स्यात् । (१३) लिङो झेर्जुस् स्यात् । (१४) सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् । (१५) सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । (१६) आदन्तात्परस्य लङो झेर्जुस् वा । (१७) लङो झेर्जुस् वा स्यात् ।

११३ तिङ्शित् सार्वधातुकम् ।
११४ आर्धधातुकं शेषः ।
११५ लिट् च ।
११६ लिङाशिषि ।
११७ छन्दस्युभयथा ।
['धातुसम्बन्धे समानाधिकरणे स्वाङ्गे लिटस्तस्थस्थमिपां सप्तदश' ।]

इति तृतीयाध्यायस्य चतुर्थः पादः ।



# अथ चतुर्थोऽध्यायः ।

## प्रथमः पादः ।

१ ङ्याप्प्रातिपदिकात् ।
२ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।
३ स्त्रियाम् ।

---

(१) तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः । (२) तिङ्शिद्भ्योऽन्यो 'धातो'रितिविहितः प्रत्यय एतत्संज्ञः स्यात् । (३) लिडादेशस्तिङार्धधातुकसंज्ञः स्यात् । (४) आशिषि लिङः तिङार्द्धधातुकसंज्ञः स्यात् । (५) धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात् ।
इति तृतीयाध्यायस्य चतुर्थं पादः ।



(६) ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमसमाप्तेरधिकारः । (७) ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाःस्युः । (८) अधिकारोऽयं समर्थानामिति यावत् ।

४ अजाद्यतष्टाप् ।
५ ऋन्नेभ्यो ङीप् ।
६ उगितश्च ।
७ वनो र च ।
८ पादोऽन्यतरस्याम् ।
९ टाबृचि ।
१० न षट्स्वस्रादिभ्यः ।
११ मनः ।
१२ अनो बहुव्रीहेः ।
१३ डाबुभाभ्यामन्यतरस्याम् ।
१४ अनुपसर्जनात् ।
१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।
१६ यञश्च ।
१७ प्राचां ष्फ तद्धितः ।
१८ सर्वत्र लोहितादिकतन्तेभ्यः

(१) अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजा । (२) ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्स्यात् । कर्त्री । (३) उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् । भवन्ती (४) वन्नन्तात्तदन्ताच्च प्रातिपदिकात्स्त्रियां ङीप्स्यात्, रश्चान्तादेशः । अतिसुत्वरी । (५) पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकान्ङीब्वा स्यात् । द्विपदी । (६) ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा (७) षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः । (८) मनन्तान्न ङीप् । सीमा । (९) अनन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । (१०) सूत्रद्वयोपात्ताभ्यां डाब्वा । सीमा, सीमे, सीमानौ । (११) अधिकारोयम् । (१२) अनुपसर्जनं यट्टिड्ढादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । (१३) यञन्तात्स्त्रियां ङीप्स्यात् । गार्गी । (१४) यञन्तात्ष्फो वा स्यात् स्त्रियां स च तद्धितः । (१५) लोहितादिभ्यः कतशब्दान्तेभ्यो नित्यं ष्फःस्यात् । लौहित्यायनी ।

१९ कौरव्यमाण्डूकाभ्यां च ।
२० वयसि प्रथमे ॥१॥
२१ द्विगोः ।
२२ अपरिमाणविस्ताचितक-
स्वल्येभ्यो न तद्धितलुकि ।
२३ काण्डान्ताल् क्षेत्रे ।
२४ पुरुषाल् प्रमाणेऽन्यतर-
स्याम् ।
२५ बहुव्रीहेरूधसो ङीष् ।
२६ संख्याव्ययादेर्ङीप् ।
२७ दामहायनान्ताच्च ।
२८ अन उपधालोपिनोऽन्य-
तरस्याम् ।
२९ नित्यं संज्ञाछन्दसोः ।
३० केवलमामकभागधेय-
पापाऽपरसमानार्यकृत-
सुमङ्गलभेषजाच्च ।
३१ रात्रेश्चाऽजसौ ।
३२ अन्तर्वत्पतिवतोर्नुक् ।

(१) आभ्यां ष्फः स्यात् । कौरव्यायणी । (२) प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात् । कुमारी । (३) अदन्ताद्द्विगोर्ङीप्स्यात् । पञ्चाजी । (४) अपरिमाणान्ताद्विस्ताद्यन्ताच्च द्विगोर्ङीन्न । पञ्चाश्वा । (५) क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप्, तद्धितलुकि । द्विकाण्डा । (६) प्रमाणे यः पुरुषः तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्विपुरुषी । (७) ऊधोन्ताद्बहुव्रीहेर्ङीप् स्यात्स्त्रियाम् । कुण्डोध्नी । (८) संख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्तात् ङीप् स्यात् । (९) संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात् । द्विदाम्नी । (१०) अनन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात् । (११) अनन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् । सुराज्ञी । (१२) एभ्यो नवभ्यो नित्यं ङीप्स्यात्संज्ञाछन्दसोः । मामकी । (१३) रात्रिशब्दान्ङीप्स्यात् । रात्री व्यख्यदायती । (१४) एतयोः स्त्रियां नुक् स्यात् । पतिवत्नी ।

३३ पत्युर्नो यज्ञसंयोगे ।
३४ विभाषा सपूर्वस्य ।
३५ नित्यं सपत्न्यादिषु ।
३६ पूतक्रतोरै च ।
३७ वृषाकप्यग्निकुसितकुसीदानामुदात्तः ।
३८ मनोरौ वा ।
३९ वर्णादनुदात्तात्तोपधात्तो नः
४० अन्यतो ङीष् ॥ २ ॥
४१ षिद्गौरादिभ्यश्च ।
४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ।
४३ शोणात् प्राचाम् ।

(१) पतिशब्दस्य तकारान्तादेशः स्त्रियां, यज्ञसंयोगे । (२) पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् । गृहपतिः । (३) सपत्न्यादिषु नित्यं पत्युर्नकारादेशः स्यात् । (४) 'पूतक्रतु' शब्दस्य स्त्रियामैकारोन्तादेशः स्यात् ङीप्च । (५) एषामुदात्त 'ऐ' आदेशः स्यान्ङीप् च । (६) मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा ताभ्यां सन्नियोगशिष्टो ङीप्च । मनावी । (७) वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकात्—त्रा ङीप्स्यात्, तकारस्य नकारादेशश्च । एनी । (८) तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात् स्त्रियां ङीष्स्यात् । कल्माषी । (९) षिद्भ्यो गौरादिभ्यश्च ङीष्स्यात् । नर्तकी । (१०) एभ्य एकादशभ्यः प्रातिपदिकेभ्य क्रमाद्वृत्त्यादिष्वर्थेषु ङीष्स्यात् । जानपदी । (११) शोणशब्दात् स्त्रियां ङीष्स्यात्प्राचां मते । शोणी ।

४४ [1]वोतो गुणवचनात् ।
४५ [2]बह्वादिभ्यश्च ।
४६ [3]नित्यं छन्दसि ।
४७ [4]भुवश्च ।
४८ [5]पुंयोगादाख्यायाम् ।
४९ [6]इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।
५० [7]क्रीतात् करणपूर्वात् ।
५१ [8]क्तादल्पाख्यायाम् ।
५२ [9]बहुव्रीहेश्चान्तोदात्तात् ।
५३ [10]अस्वाङ्गपूर्वपदाद्वा ।
५४ [11]स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।
५५ [12]नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।
५६ [13]न क्रोडादिबह्वचः ।

(१) उदन्ताद्गुणवाचिनो वा ङीष्स्यात् । मृद्वी । (२) एभ्यो वा ङीष्स्यात् । बह्वी । (३) बह्वादिभ्यश्छन्दसि विषये नित्यं ङीप् । बह्वीषु । (४) भुवो ङीप् स्यात् छन्दसि विषये । विभ्वी । (५) या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष्स्यात् । गोपी । (६) एभ्यो-नुमागमः स्यात् ङीष्च । इन्द्राणी । (७) क्रीतान्तादन्तात्करणादेः स्त्रियां ङीष्स्यात् । वस्त्रक्रीती । (८) करणादेः क्तान्तादन्तात्स्त्रियां ङीष्स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती । (९) बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात्स्त्रियां ङीष्स्यात् । ऊरुभिन्नी । (१०) अस्वाङ्गपूर्वपदात्—अन्तोदात्तात् क्तान्ताद्बहुव्रीहेः स्त्रियां वा ङीप् । शार्ङ्गजग्धी (११) असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीप् । अतिकेशी । (१२) एभ्यो वा ङीष्स्यात् । तुङ्गनासिकी । (१३) क्रोडादेर्बह्वचश्च स्वाङ्गान्तात् ङीप् । कल्याणक्रोडा ।

५७ सहनञ्विद्यमानपूर्वाच्च ।
५८ नखमुखात् संज्ञायाम् ।
५९ दीर्घजिह्वी च च्छन्दसि ।
६० दिक्पूर्वपदान्ङीप् ॥३॥
६१ वाहः ।
६२ सख्यशिश्वीति भाषायाम् ।
६३ जातेरस्त्रीविषयादयोपधात् ।
६४ पाककर्णपर्णपुष्पफलमूल-
वालोत्तरपदाच्च ।
६५ इतो मनुष्यजातेः ।
६६ ऊङुतः ।
६७ बाह्वन्तात्संज्ञायाम् ।
६८ पङ्गोश्च ।
६९ ऊरूत्तरपदादौपम्ये ।
७० संहितशफलक्षणवामादेश्च

(१) सहेत्यादित्रिकपूर्वान्न ङीप् । अकेशा । (२) ङीष्न स्यात् । शूर्पणखा । (३) ङीष्स्यात् छन्दसि-विषये । (४) दिक्पूर्वपदा-त्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीपो ङीवादेशः स्यात् । प्राङ्मुखी । (५) वाहन्तात्प्रातिपदिकान् ङीप् स्यात्। दित्यवाट् च मे दित्यौही च मे । (६) आभ्यां ङीप्स्यात् । अशिश्वी । (७) जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष्स्यात् । तटी । (८) पाकाद्युत्तरपदाज्जाति-वाचिनः स्त्रीविषयात् ङीष्स्यात् । ओदनपाकी । (९) ङीष्स्यात् । दाक्षी । (१०) उकारान्तादयोपधा-न्मनुष्यवाचिनः स्त्रियामूङ् स्यात् । कुरूः । (११) स्त्रियामूङ् स्यात् । भद्रबाहूः। (१२) पङ्गुशब्दात् स्त्रिया-मूङ् स्यात् । पङ्गूः । (१३) उपमा-नवाचि पूर्वपदमूरूत्तरपदं यत्प्राति-पदिकं तस्मादूङ् स्यात् । करभोरूः । (१४) सहित शफ लक्षण इत्येवमादेः प्रातिपदिकादूरूत्तरपदात्स्त्रियामूङ्स्यात् ।

७१ कद्रुकमण्डल्वोश्छन्दसि ।[1]
७२ संज्ञायाम् ।[2]
७३ शार्ङ्गरवाद्यञो ङीन् ।[3]
७४ यङश्चाप् ।[4]
७५ आवट्याच्च ।[5]
७६ तद्धिताः ।[6]
७७ यूनस्तिः ।[7]
७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।[8]
७९ गोत्रावयवात् ।[9]
८० क्रौड्यादिभ्यश्च ।[10]
८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् ।[11]
८२ समर्थानां प्रथमाद्वा ।[12]
८३ प्राग्दीव्यतोऽण् ।[13]
८४ अश्वपत्यादिभ्यश्च ।[14]

---

(१) ऊङ् स्यात् । (२) कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात् । कमण्डलूः । (३) शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात् । शार्ङ्गरवी । (४) यङन्तात् स्त्रियां चाप्स्यात् । आम्बष्ठ्या । (५) असाच्चाप्स्यात् । आवट्या । (६) आपञ्चमसमाप्तेरधिकारोयम् । (७) युवन्शब्दात्तिप्रत्ययः स्यात् । युवतिः । (८) गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात् । कौमुदगन्ध्या । (९) गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङ् स्यात् । पौणिक्या । (१०) स्त्रियां ष्यङ् प्रत्ययः स्यात् । क्रौड्या । (११)एभ्यः चतुर्भ्यः ष्यङ्वा । दैवयज्ञ्या । (१२) इदं पदत्रयमधिक्रियते । (१३) 'तेन दीव्यती'त्यतः प्राग् अण् इत्यधिक्रियते । (१४) एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु ।

८५ दि॒त्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।
८६ उ॒त्सादिभ्योऽञ् ।
८७ स्त्री॒पुंसाभ्यां नञ्स्नञौ भवनात् ।
८८ द्वि॒गोर्लुगनपत्ये ।
८९ गो॒त्रेऽलुगचि ।
९० यू॒नि लुक् ।
९१ फ॒क्फिञोरन्यतरस्याम् ।
९२ त॒स्यापत्यम् ।
९३ ए॒को गोत्रे ।
९४ गो॒त्राद्यून्यस्त्रियाम् ।
९५ अ॒त इञ् ।
९६ बा॒ह्वादिभ्यश्च ।

(१) दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । दैत्यः । (२) उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् स्यात् । औत्सः । (३) 'धान्यानां भवने' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । (४) द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चकपालः । (५) अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात् । गार्गीयाः । (६) प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात् । ग्लुचुकायनिः । (७) फक्फिञोर्युवप्रत्यययोर्लुग्वा स्यादजादौ प्राग्दीव्यतीये विवक्षिते । (८) षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाः प्रत्ययाश्च वा स्युः । औपगवः । (९) गोत्रे एक एवापत्यप्रत्ययः स्यात् । औपगवः । (१०) यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । गार्ग्यायणः । (११) अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यात् । (१२) बाह्वादिभ्य इञ् स्यादपत्येऽर्थे ।

९७ सुधातुरकङ् च।
९८ गोत्रे कुञ्जादिभ्यश्च्फञ्।
९९ नडादिभ्यः फक्।
१०० हरितादिभ्योऽञः।
१०१ यञिञोश्च।
१०२ शरद्वच्छुनकदर्भाद्-
भृगुवत्साग्रायणेषु।
१०३ द्रोणपर्वतजीवन्तादन्य-
तरस्याम्।
१०४ अनृष्यानन्तर्ये बिदादि-
भ्योऽञ्।
१०५ गर्गादिभ्यो यञ्।
१०६ मधुबभ्र्वोर्ब्राह्मणकौशि-
कयोः।
१०७ कपिबोधादाङ्गिरसे।
१०८ वतण्डाच्च।
१०९ लुक् स्त्रियाम्।
११० अश्वादिभ्यः फञ्।
१११ भर्गात्त्रैगर्ते।
११२ शिवादिभ्योऽण्।

(१) सुधातृशब्दादिञ् स्यात्तत्सन्नियोगेनाऽकङादेशश्च। सौधातकिः। (२) कुञ्जादिभ्यः च्फञ् स्याद् गोत्रे। कौञ्जायन्यः। (३) नडादिभ्यः फक् स्यात् गोत्रापत्ये। नाडायनः।

(४) हरितादिभ्योऽञन्तेभ्यो यूनि फक् स्यात्। हारितायनः। (५) गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्। गार्ग्यायणः। (६) एभ्यो गोत्रे फक् स्यात्। शारद्वतायनः। (७) एभ्यो गोत्रे फक् स्याद्वा, पक्षे इञ्। द्रौणायनः। (८) एभ्यो गोत्रेऽञ्, ये त्वनृषयस्तेभ्योऽनन्तरे। बैदः। (९) एभ्यो गोत्रे यञ् स्यात्। गार्ग्यः। (१०)गोत्रे यञ्। माधव्यः। (११)गोत्रे यञ् स्यात्। काप्यः। (१२) वतण्डाद्यञ् स्यादाङ्गिरसे। वातण्ड्यः। (१३) वतण्डाच्चेति विहितस्य लुक् स्यात्स्त्रियाम्। वतण्डी। (१४) एभ्यः गोत्रे फञ् स्यात्। आश्वायनः। (१५) भर्गात्त्रैगर्ते गोत्रे फञ्। भार्गायणः। (१६) शिवादिभ्योऽण्

११३ अवृद्धाभ्यो नदीमानुषीभ्य-स्तन्नामिकाभ्यः ।
११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च ।
११५ मातुरुत्संख्यासंभद्रपूर्वायाः
११६ कन्यायाः कनीन च ।
११७ विकर्णशुङ्गच्छगलाद्वत्स-भरद्वाजाऽत्रिषु ।
११८ पीलाया वा ।
११९ ढक् च मण्डूकात् ।
१२० स्त्रीभ्यो ढक् ।
१२१ द्व्यचः ।
१२२ इतश्चाऽनिञः ।
१२३ शुभ्रादिभ्यश्च ।
१२४ विकर्णकुषीतकात् काश्यपे ।
१२५ भ्रुवो वुक् च ।
१२६ कल्याण्यादीनामिनङ् च ।
१२७ कुलटाया वा ।
१२८ चटकाया ऐरक् ।

स्याद्गोत्रे । शैवः । (१) अवृद्धाभ्यो नदीमानुषीनामभ्योऽण् स्यात् । यामुनः । (२) एभ्योऽण् स्यात् वासिष्ठः । (३) सङ्ख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । (४) कन्याया अण् स्यादपत्ये, तत्सन्नियोगेन कनीनादेशश्च । कानीनः । (५) एभ्योऽण्स्याद्यथासङ्ख्यं वत्सादिष्वपत्येषु । वैकर्णः । (६) पीलाया अपत्येऽण् वा स्यात् । पैलः । (७) ढक् स्याच्चादण् । माण्डुकेयः । (८) स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । (९) द्व्यचः स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । दात्तेयः । (१०) इकारान्ताद्व्यचोऽपत्ये ढक् स्यान्नत्विञन्तात् । आत्रेयः । (११) शुभ्रादिभ्यो ढक् स्यात् । शौभ्रेयः । (१२) अपत्ये ढक् स्यात् । वैकर्णेयः । (१३) वुक् स्याच्चाड्ढक् । भ्रौवेयः । (१४) एषामिनङादेशः स्याड्ढक्च । काल्याणिनेयः । (१५) कुलटाया इनङ् वा स्यादपत्ये, ढक् तु नित्यः पूर्वेणैव । (१६) चटकाया एरक् स्यादपत्ये ।

१२९ गोधाया ढ्रक् ।
१३० आरगुदीचाम् ।
१३१ क्षुद्राभ्यो वा ।
१३२ पितृष्वसुश्छण् ।
१३३ ढकि लोपः ।
१३४ मातृष्वसुश्च ।
१३५ चतुष्पाद्भ्यो ढञ् ।
१३६ गृष्ट्यादिभ्यश्च ।
१३७ राजश्वशुराद्यत् ।
१३८ क्षत्राद्घः ।
१३९ कुलात् खः ।
१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ।
१४१ महाकुलादञ्खञौ ।
१४२ दुष्कुलाड्ढक् ।
१४३ स्वसुश्छः ।
१४४ भ्रातुर्व्यच्च ।
१४५ व्यन् सपत्ने ।

चाटकैरः । (१) गोधाया ढ्रक् स्यादपत्ये । गौधेरः । (२) गोधाया अपत्ये आरक् स्यात् उदीचां मते । गौधारः । (३) अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक् । काणेरः । (४) पितृष्वसुश्छण् स्यादपत्ये । पैतृस्वस्रीयः । (५) पितृष्वसुरन्त्यलोपः स्याड्ढकि । पैतृष्वसेयः । (६) पितृष्वसुर्यदुक्तं तदस्यापि स्याड्ढकि । पैतृष्वसीयः । (७) चतुष्पाद्भ्यो ढञ् स्यादपत्ये । कामण्डलेयः । (८) एभ्यो ढञ् स्यात् । गार्ष्टेयः । (९) आभ्यां यत् स्यादपत्ये । राजन्यः । (१०) क्षत्राद्घः स्यादपत्ये । क्षत्रियः । (११) कुलात्खः स्यादपत्ये । कुलीनः । (१२) अपूर्वपदात्कुलशब्दाद्यड्ढकौ वा स्तोऽपत्ये । कुल्यः । (१३) महाकुलादञ्खञौ स्तोऽपत्ये । माहाकुलः । (१४) दुष्कुलादपत्ये ढक् वा । दौष्कुलेयः । (१५) स्वसुरपत्ये छः स्यात् । स्वस्रीयः । (१६) भ्रातृशब्दादपत्ये व्यत् स्यात् । भ्रातृव्यः । (१७) भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन

१४६ रेवत्यादिभ्यष्ठक् ।
१४७ गोत्रस्त्रियाः कुत्सने ण च ।
१४८ वृद्धाट्ठक् सौवीरेषु बहुलम् ।
१४९ फेश्छ च ।
१५० फाण्टाहृतिमिमताभ्यां णफिञौ ।
१५१ कुर्वादिभ्यो ण्यः ।
१५२ सेनान्तलक्षणकारिभ्यश्च ।
१५३ उदीचामिञ् ।
१५४ तिकादिभ्यः फिञ् ।
१५५ कौशल्यकार्मार्याभ्यां च ।
१५६ अणो द्व्यचः ।
१५७ उदीचां वृद्धादगोत्रात् ।
१५८ वाकिनादीनां कुक् च ।
१५९ पुत्रान्तादन्यतरस्याम् ।
१६० प्राचामवृद्धात् फिन् बहुलम् ।

शत्रौ वाच्ये । भ्रातृव्यः । (१) एभ्योऽपत्ये ढक् स्यात् । रैवतिकः । (२) गोत्रं या स्त्री तद्वाचकाच्छब्दात् णठकौ स्तः कुत्सायाम् । गार्ग्यः । (३) वृद्धात्सौवीरगोत्रादपत्ये बहुलं ठक् स्यात् कुत्सायाम् । (४) फिञन्तात्सौवीरगोत्रादपत्ये छः, ठक् च कुत्सने गम्ये । यामुन्दायनिः । (५) आभ्यां सौवीरविषयाभ्यां णफिञौ स्तोऽपत्ये । (६) एभ्यो ण्यः स्यादपत्ये । कौरव्यः । (७) एभ्यो ण्यः । हारिषेण्यः । (८) सेनान्तलक्षणकारिभ्योऽपत्ये इञ् स्यादुदीचां मतेन । (९) एभ्यः फिञ् स्यात् । तैकायनिः । (१०) अपत्ये फिञ् । कौशल्यायनिः । (११) अपत्ये फिञ् । कार्मार्यायणिः । (१२) अगोत्राद्वृद्धादपत्ये फिञ् स्यादुदीचां मतेन । आम्रगुप्तायनिः । (१३) अपत्ये फिञ् वा । वाकायनिः । (१४) पुत्रान्ताद्गोत्राद्वृद्धादपत्ये फिञ् वा स्यात् कुक् च उदीचां मतेन । (१५) अवृद्धात्फिन् वा स्यात्प्राचाम् ।

१६१ मनोर्जातावञ्यतौ षुक् च ।
१६२ अपत्यं पौत्रप्रभृति गोत्रम् ।
१६३ जीवति तु वंश्ये युवा ।
१६४ भ्रातरि च ज्यायसि ।
१६५ वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति ।
[१६६ वृद्धस्य च पूजायाम् ।]
[१६७ यूनश्च कुत्सायाम् ।]
१६८ जनपदशब्दात् क्षत्रियादञ् ।
१६९ साल्वेयगान्धारिभ्यां च ।
१७० द्व्यञ्मगधकलिङ्गसूरमसादण् ।
१७१ वृद्धेत्कोसलाजादाञ् ञ्यङ् ।
१७२ कुरुनादिभ्यो ण्यः ।
१७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।
१७४ ते तद्राजाः ।

(१) मनोरञ्यतौ स्तः षुगागमश्च जातौ । मानुषः । (२) अपत्यत्वेन-विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् । (३) वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव न गोत्रसंज्ञम् । (४) ज्येष्ठे भ्रातरि जीवति कनियांश्चतुर्थादिर्युवा स्यात् । (५) भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् । (६-७) इमे वार्तिके सूत्रपाठे कैश्चित्प्रक्षिप्ते । (८) जनपद-क्षत्रिययोर्वाचकादञ् स्यादपत्ये । ऐक्ष्वाकः । (९) आभ्यामपत्येऽञ् । साल्वेयः । (१०) जनपदशब्दात्क्षत्रियाभिधायिभ्यः एभ्योऽण् स्यात् । (११) जनपदशब्दात्क्षत्रियवाचिभ्यः एभ्यो ञ्यङ् स्यात् । (१२) एभ्यो ण्यः स्यात् । (१३) साल्वो जनपदः, तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् स्यात् । औदुम्बरिः । (१४) अञादयः एतत्संज्ञाः स्युः ।

१७५ कम्बोजाल्लुक् ।

१७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।

१७७ अतश्च ।

१७८ न प्राच्यभर्गादियौधेयादिभ्यः ।

[ 'ङ्याब्द्विगोः षिद्गौरादिवाहो दैवयाज्ञियञ्ञो द्व्यचो महाकुलान्मनोर्जातावष्टादश' ॥ ]

इति चतुर्थाध्यायस्य प्रथमः पादः

## द्वितीयः पादः ।

१ तेन रक्तं रागात् ।

२ लाक्षारोचनाट्ठक् ।

३ नक्षत्रेण युक्तः कालः ।

४ लुबविशेषे ।

५ संज्ञायां श्रवणाऽश्वत्थाभ्याम् ।

६ द्वन्द्वाच्छः ।

(१) अस्मात्तद्राजस्य लुक् स्यात् । कम्बोजः । (२) तद्राजस्य लुक् स्यात् । अवन्तिः । (३) तद्राजस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । (४) एभ्यस्तद्राजस्य न लुक् पाञ्चाली ।

इति चतुर्थाध्यायस्य प्रथमः पादः ।

(५) तृतीयान्ताद्रागविशेषवाचिनः शब्दाद्रक्तमित्यर्थे यथाविहितं प्रत्ययाःस्युः। काषायम् । (६) आभ्यां ठक् स्याद्रक्तेऽर्थे । लाक्षिकः । (७) तृतीयान्तात् नक्षत्रवाचकशब्दाद्युक्तमित्यर्थे यथाविहितं प्रत्ययाः स्युः । पौषमहः । (८) पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्यकालस्याऽवान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । (९) आभ्यां परस्य नक्षत्रप्रत्ययस्य लुप् स्यात्संज्ञायाम् । श्रवणा । (१०) नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् विशेषे सत्यसति च । तिष्य-

७ दृष्टं[1] साम ।
८ कलेर्ढक्[2] ।
९ वामदेवाड्ड्यड्ड्यौ[3] ।
१० परिवृतो[4] रथः ।
११ पाण्डुकम्बलादिनिः[5] ।
१२ द्वैपवैयाघ्रादञ्[6] ।
१३ कौमाराऽपूर्ववचने[7] ।
१४ तत्रोद्धृतममत्रेभ्यः[8] ।
१५ स्थण्डिलाच्छयितरि व्रते[9] ।
१६ संस्कृतं[10] भक्षाः ।
१७ शूलोखाद्यत्[11] ।
१८ दध्नष्ठक्[12] ।
१९ उदश्वितोऽन्यतरस्याम्[13] ।
२० क्षीराड्ढञ्[14] ।

पुनर्वसवीयम् । (१) दृष्टं सामेत्यर्थे तृतीयान्तादण् प्रत्ययः स्यात् । वासिष्ठम् । (२) कलिशब्दाड्ढक् स्यात् । कालेयम् । (३) अस्मादुक्तेऽर्थे ड्यत्–ड्यौ स्तः । वामदेव्यम् । (४) 'परिवृतो रथ'इत्यर्थे तृतीयान्तादण् प्रत्ययः स्यात् । वास्त्रम् । (५) पाण्डुकम्बलादिनिः स्यादुक्तेऽर्थे । (६) आभ्यामञ् स्यादुक्तेऽर्थे । द्वैपः । (७) 'कौमार' इति निपात्यतेऽपूर्ववचने । कौमारः पतिः । (८) पात्रवाचिभ्यः सप्तम्यन्तेभ्यः उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः । (९) स्थण्डिलशब्दात्सप्तम्यन्तात्शयितर्यर्थे यथाविहितं प्रत्ययो भवति, समुदायेन चेद्व्रतं गम्यते । (१०) सप्तम्यन्तादण् स्यात् संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः । (११) आभ्यामुक्तेऽर्थे यत्प्रत्ययो भवति । शूल्यम् । (१२) सप्तम्यन्ताद् दधिशब्दादुक्तेऽर्थे ठक् प्रत्ययः स्यात् । दाधिकम् । (१३)अस्मात्सप्तम्यन्ताट्ठक् स्यात्पक्षेऽण् , उक्तेऽर्थे । औदश्वितम् । (१४)क्षीरशब्दात्सप्तम्यन्तादुक्तेऽर्थे ढञ् स्यात् ।

२१ सा॑ऽस्मिन् पौर्णमासीति ।
२२ आ॒ग्रहायण्यश्वत्थाट्ठक् ।
२३ वि॑भाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ।
२४ सा॑ऽस्य देवता ।
२५ कं॑स्येत् ।
२६ शु॑क्राद्घन् ।
२७ अ॑पोनप्त्रपान्नप्तृभ्यां घ ।
२८ छ॑ च ।
२९ म॑हेन्द्राद्घाणौ च ।
३० सो॑माट्ट्यण् ।
३१ वा॑य्वृतुपित्रुषसो यत् ।
३२ द्या॑वापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।
३३ अ॑ग्नेर्ढक् ।
३४ का॑लेभ्यो भववत् ।

क्षैरेयी । (१) प्रथमान्तात्सप्तम्यर्थे प्रत्ययः स्याद्यः प्रथमान्तोऽर्थः स चेत्पौर्णमासी भवति । पौषः । (२) प्रथमान्ताभ्यामाभ्यां ठक् स्यादुक्तेऽर्थे । आग्रहायणिकः । (३) एभ्यः प्रथमान्तेभ्यः छग्वा स्यात् । फाल्गुनः । (४) प्रथमान्ताद्देवतावाचकादस्येत्यर्थे प्रत्ययाः स्युः । ऐन्द्रं हविः । (५) कशब्दस्येदादेशः स्यात्प्रत्ययसन्नियोगेन । कायं हविः । (६) शुक्रशब्दात्सास्यदेवतेत्यर्थे घन् स्यात् । शुक्रियम् (७) प्रथमान्ताभ्यामाभ्यां घः स्यादुक्तेऽर्थे । अपोनप्त्रियम् । (८) प्रथमान्ताभ्यां छः स्यादुक्तेऽर्थे । अपोनप्त्रीयम् । (९) महेन्द्रशब्दाद्घाणौ स्तः चकाराच्छश्चोक्तेऽर्थे । महेन्द्रियम् । (१०) सोमशब्दात् ट्यण् स्यात् । सौम्यम् । (११) एभ्यो यत् स्यात् । वायव्यम् । (१२) एभ्यश्छः स्यादुक्तेऽर्थे । द्यावापृथिवीयम् । (१३) अग्निशब्दाड्ढक् स्यात् । आग्नेयः । (१४) कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते 'सास्यदेवते'त्यर्थेऽतिदिश्यन्ते ।

३५ म[1]हाराजप्रोष्ठपदाट्ठञ् ।
३६ पि[2]तृव्यमातुलमातामह-
पितामहाः ।
३७ त[3]स्य समूहः ।
३८ भि[4]क्षादिभ्योऽण् ।
३९ गोत्रोक्षोष्ट्रोरभ्रराज-
राजन्यराजपुत्रवत्समनु-
ष्याजाऽद्वुञ् ।
४० के[6]दाराद्यञ् च ।
४१ ठ[7]ञ् कवचिनश्च ।
४२ ब्राह्मणमाणववाडवाद्यन् ।
४३ ग्रामजनबन्धुभ्यस्तल् ।
४४ अ[10]नुदात्तादेरञ् ।
४५ ख[11]ण्डिकादिभ्यश्च ।
४६ च[12]रणेभ्यो धर्मवत् ।
४७ अ[13]चित्तहस्तिधेनोष्ठक् ।
४८ के[14]शाश्वाभ्यां यञ्छावन्य-
तरस्याम् ।
४९ पा[15]शादिभ्यो यः ।

(१) आभ्यां ठञ् स्यात् । माहाराजिकम् । (२) एते निपात्यन्ते । पितृव्यः । (३) षष्ठ्यन्तात्समूहेऽर्थे यथाविहितं प्रत्ययाः स्युः । काकम् । (४) एभ्योऽण् स्यात्समूहेऽर्थे । भैक्षम् । (५) एभ्यः समूहे वुञ् स्यात् । ग्लौचुकायनकम् । (६) षष्ठ्यन्तात् केदारशब्दाद्यञ् स्यात् समूहेऽर्थे । चकाराद्वुञ् । (७) कवचिन्छब्दाट्ठञ् स्यात् समूहेऽर्थे । कावचिकम् । (८) एभ्यो यन् स्यादुक्तेऽर्थे । ब्राह्मण्यम् । (९) एभ्यस्तल् स्यादुक्तेऽर्थे । ग्रामता । (१०) अनुदात्तादेः शब्दादञ् स्यात् । कापोतम् । (११) एभ्योऽञ् स्यादुक्तेऽर्थे । खाण्डिकम् । (१२) षष्ठ्यन्तेभ्यश्चरणशब्देभ्यः समूहे धर्मवत्प्रत्ययाः स्युः । (१३) एभ्यष्ठक्स्यात्समूहेऽर्थे । हास्तिकम् । (१४) आभ्यां यथासंख्यं यञ्छौ स्तः । कैश्यम् । (१५) एभ्यो यः स्यादुक्तेऽर्थे । पाश्या ।

५० खलगोरथात् ।
५१ इनित्रकट्यचश्च ।
५२ विषयो देशे ।
५३ राजन्यादिभ्यो वुञ् ।
५४ भौरिक्याद्यैषुकार्यादिभ्यो विधलभक्तलौ ।
५५ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।
५६ संग्रामे प्रयोजनयोद्धृभ्यः ।
५७ तदस्यां प्रहरणमिति क्रीडायां णः ।
५८ घञः सास्यां क्रियेति ञः ।
५९ तदधीते तद्वेद ।
६० क्रतूक्थादिसूत्रान्ताट्ठक् ।
६१ क्रमादिभ्यो वुन् ।
६२ अनुब्राह्मणादिनिः ।

(१) एभ्यो यः स्यात् । खल्यः । (२) खलादिभ्यः क्रमात् इनित्रकट्यचः स्युः । खलिनी । (३) षष्ठ्यन्ताद्‍ढणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शैबः । (४) एभ्यो वुन् स्यादुक्तेऽर्थे । राजन्यकः । (५) एभ्यो यथासंख्यमेतौ स्तः । भौरिकिविधः । (६) छन्दोवाचकात् प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथश्चेत् । पाङ्क्तः । (७) एभ्यः प्रथमान्तेभ्योऽस्येत्यर्थे प्रत्ययाः स्युः सङ्ग्रामेऽभिधेये । सौभद्रः । (८) प्रहरणवाचकात् प्रथमान्तादस्यामित्यर्थे णः स्यात् यः सप्तम्यन्तार्थः सा चेत् क्रीडा भवति । दाण्डा । (९) घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात्, (१०) द्वितायान्तादधीते इत्यर्थे वेदेत्यर्थे च प्रत्ययाः स्युः । (११) क्रतुविशेषवाचिभ्यो मुख्यार्थेभ्यो वेदतरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतर्यर्थेऽण् स्यात् । आग्निष्टोमिकः । (१२) द्वितीयान्तेभ्य एभ्यो वुन् स्यादुक्तयोरर्थयोः । क्रमकः । (१३) अस्मादिनिः स्यादुक्तयोरर्थयोः । अनुब्राह्म-

६३ वसन्तादिभ्यष्ठक् ।
६४ प्रोक्ताल्लुक् ।
६५ सूत्राच्च कोपधात् ।
६६ छन्दोब्राह्मणानि च तद्विषयाणि ।
६७ तदस्मिन्नस्तीति देशे तन्नाम्नि ।
६८ तेन निर्वृत्तम् ।
६९ तस्य निवासः ।
७० अदूरभवश्च ।
७१ ओरञ् ।
७२ मतोश्च बह्वजङ्गात् ।
७३ बह्वचः कूपेषु ।
७४ उदक्च विपाशः ।

णम् । (१) एभ्यष्ठक् स्यादुक्तयोरर्थयोः । वासन्तिकः । (२) प्रोक्तार्थकप्रत्ययात्परस्याऽध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । (३) सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक्स्यात् । अष्टकाः । (४) छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । (५) अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात् । प्रत्ययान्तनामा देशश्चेत् । औदुम्बरः । (६) तृतीयान्तान्निर्वृत्तमित्यर्थे यथाविहितं प्रत्ययाः स्युः । कौशाम्बी । (७) षष्ठ्यन्तान्निवास इत्यर्थे प्रत्ययाः स्युः । शैबः । (८) पञ्चम्यन्ताददूरभव इत्यादिचतुर्ष्वर्थेषु प्रत्ययाः स्युः । वैदिशम् । (९) उवर्णादञ् स्याच्चतुर्ष्वर्थेषु । काक्षतवम् । (१०) बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्, नाऽण् । सैध्रकावतम् । (११) बह्वचः प्रातिपदिकादञ्स्यादुक्तेष्वर्थेषु कूपेष्वभिधेयेषु । दैर्घवरत्रः । (१२) विपाश उत्तरे कूले ये कूपास्तेष्वञ् स्यात् । दात्तःकूपः

७५ सङ्कलादिभ्यश्च [1]।
७६ स्त्रीषु [2] सौवीरसाल्वप्राक्षु।
७७ सुवास्त्वादिभ्योऽण् [3]।
७८ रोणी [4]।
७९ कोपधाच्च [5]।
८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशवलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः [6]।
८१ जनपदे लुप् [7]।
८२ वरणादिभ्यश्च [8]।
८३ शर्कराया वा [9]।
८४ ठक्छौ च [10]।
८५ नद्यां मतुप् [11]।
८६ मध्वादिभ्यश्च [12]।
८७ कुमुदनडवेतसेभ्यो ड्मतुप् [13]

(१) सङ्कलादिभ्योऽञ् स्यादुक्तेष्वर्थेषु। साङ्कलम्। (२) स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ्। दात्तामित्री नगरी। (३) एभ्योऽण् स्याच्चातुरर्थिकः। सौवास्तवम्। (४) रोणीशब्दात्तदन्ताच्चाऽण्। रौणः। (५) कोपधादण् स्याच्चातुरर्थिकः। कार्णच्छिद्रकः कूपः। (६) एभ्यः सप्तदशभ्यः सप्तदश प्रत्ययाः क्रमात्स्युश्चतुरर्थ्याम्। आरीहणकम्। (७) जनपदे वाच्ये वाच्ये चातुरर्थिकस्य लुप्स्यात्। पञ्चालाः। (८) एभ्यश्चातुरर्थिकस्य लुप्। वरणाः। (९) असाच्चातुरर्थिकस्य वा लुप्स्यात्। शर्करा। (१०) शर्करायाष्ठक्छौ स्तः। शार्करम्। (११) नद्यामभिधेयायां मतुप्स्याच्चातुरर्थिकः। इक्षुमती। (१२) मध्वादिभ्यो मतुप्स्याच्चातुरर्थिकः। मधुमान्। (१३) एभ्यो ड्मतुप्स्याच्चातुरर्थिकः।

८८ नडशादाड्ड्वलच्[1] ।
८९ शिखाया वलच्[2] ।
९० उत्करादिभ्यश्छः[3] ।
९१ नडादीनां कुक् च[4] ।
९२ शेषे[5] ।
९३ राष्ट्रावारपाराद्धखौ[6] ।
९४ ग्रामाद्यखञौ[7] ।
९५ कत्र्यादिभ्यो ढकञ्[8] ।
९६ कुलकुक्षिग्रीवाभ्यः श्वाऽऽस्यलङ्कारेषु[9] ।
९७ नद्यादिभ्यो ढक्[10] ।
९८ दक्षिणापश्चात्पुरसस्त्यक्[11] ।
९९ कापिश्याः ष्फक्[12] ।
१०० रङ्कोरमनुष्येऽण् च[13] ।
१०१ द्युप्रागपागुदक्प्रतीचो यत्[14] ।
१०२ कन्थायाष्ठक्[15] ।
१०३ वर्णौ वुक्[16] ।

कुमुद्वान् । (१) नडशादाड्ड्वलच् स्यात् । नड्वलः । (२) शिखाशब्दाद् वलच् स्यात् । शिखावलम् । (३) उत्कराच्छः स्यात् । उत्करीयः । (४) नडादीनां कुक् स्याच्छप्रत्ययश्च । नडकीयम् । (५) अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चाक्षुषं रूपम् । (६) आभ्यां क्रमाद्धखौ स्तः शेषे । राष्ट्रियः । (७) ग्रामशब्दाद्यखञौ स्तः । ग्राम्यः । (८) कत्र्यादिभ्यो ढकञ् स्यात् । कात्रेयकः । (९) एभ्यो यथासंख्यं श्वादिषु जाताद्यर्थेषु ढकञ् स्यात् । कौलेयकः श्वा । (१०) एभ्यो ढक् स्यात् । नादेयम् । (११) एभ्यस्त्यक्स्यात् । दाक्षिणात्यः । (१२) कापिशीशब्दात् ष्फक् स्यात् । कापिशायनं मधु । (१३) रङ्कोरण् स्याच्चात् ष्फक्, अमनुष्येऽभिधेये । राङ्कवो गौः । (१४) एभ्यो यत्स्यात् । दिव्यम् । (१५) कन्थाशब्दाट्ठक्स्यात् । कान्थिकः । (१६) वर्णुः नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात् । कान्थकम् ।

१०४ अव्ययात्त्यप्।
१०५ ऐषमोह्यःश्वसोऽन्यतरस्याम्
१०६ तीररूप्योत्तरपदादञ्ञौ।
१०७ दिक्पूर्वपदादसंज्ञायां ञः।
१०८ मद्रेभ्योऽञ्।
१०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्।
११० प्रस्थोत्तरपदपलद्यादिकोपधादण्।
१११ कण्वादिभ्यो गोत्रे।
११२ इञश्च।
११३ न द्व्यचः प्राच्यभरतेषु।
११४ वृद्धाच्छः।
११५ भवतष्ठक्छसौ।
११६ काश्यादिभ्यष्ठञ्ञिठौ।
११७ वाहीकग्रामेभ्यश्च।

(१) अव्ययात्त्यप्स्यात्। अमात्यः। (२) एभ्यस्त्यब्वा स्यात्। पक्षे वक्ष्यमाणौ ट्युट्युलौ। ऐषमस्त्यम्। (३) तीरोत्तरपदाद्रूप्योत्तरदाच्च यथासंख्यं अञ्ञौ स्तः। काकतीरम्। (४) दिक्पूर्वपदाञ्ञः स्यादसञ्ज्ञायाम्। पौर्वशालः। (५) दिक्पूर्वपदन्मद्रशब्दादञ् स्यात्। पौर्वमद्रः। (६) वह्वचोऽन्तोदात्तादुदीच्यग्रामादञ्स्यात्। शैवपुरम्। (७) एभ्योऽण् स्यात्। माहिकिप्रस्थः। (८) एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात्। काण्वाः। (९) गोत्रे य इञ् तदन्तादण् स्यात्। दाक्षाः। (१०) द्व्यचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् न। प्रौष्ठीयाः। (११) वृद्धाच्छः स्यात् शैषिकः। शालीयः। (१२) वृद्धाद्भवत एतौ स्तः। भावत्कः। (१३) काश्यादिभ्य एतौ स्तः। काशिकी। (१४) वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः। छस्यापवादः। कास्ती-

११८ विभाषोशीनरेषु ।
११९ ओर्देशे ठञ् ।
१२० वृद्धात् प्राचाम् ।
१२१ धन्वयोपधाद्वुञ् ।
१२२ प्रस्थपुरवहान्ताच्च ।
१२३ रोपधेतोः प्राचाम् ।
१२४ जनपदतदवध्योश्च
१२५ अवृद्धादपि बहुवचनविषयात् ।
१२६ कच्छाग्निवक्त्रगर्तोत्तरपदात् ।
१२७ धूमादिभ्यश्च ।
१२८ नगरात् कुत्सनप्रावीण्ययोः ।
१२९ अरण्यान्मनुष्ये ।

रिकी । (१) एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनिकी । (२) उवर्णान्ताद्देशवाचिनष्ठञ् स्यात् । निषादकर्षुकः । (३) उवर्णान्ताद्वृद्धात्प्राग्देशवाचिनष्ठञ् स्यात् । प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आढकजम्बुकः । (४) धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतकः । (५) एतदन्ताद्वृद्धाद्देशवाचिनो वुन् स्यात् । मालाप्रस्थकः । (६) रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात् । पाटलिपुत्रकः । (७) जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात् । आदर्शकः । (८) अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ स्यात् । आङ्गकः । (९) देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् । दारुकच्छकः । (१०) देशवाचिभ्यो वुञ् । धौमकः । (११) नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकः । (१२) अरण्याद्वुञ्स्यान्मनुष्येऽभिधेये ।

१३० विभाषा कुरुयुगन्धराभ्याम् [1]

१३१ मद्रवृज्योः कन् [2] ।

१३२ कोपधादण् [3] ।

१३३ कच्छादिभ्यश्च [4] ।

१३४ मनुष्यतत्स्थयोर्वुञ् [5] ।

१३५ अपदातौ साल्वात् [6] ।

१३६ गोयवाग्वोश्च ।

१३७ गर्तोत्तरपदाच्छः [8] ।

१३८ गहादिभ्यश्च [9] ।

१३९ प्राचां कटादेः [10] ।

१४० राज्ञः क च [11] ।

१४१ वृद्धादकेकान्तखोपधात् [12] ।

१४२ कन्थापलदनगरग्राम-ह्रदोत्तरपदात् [13] ।

१४३ पर्वताच्च [14] ।

आरण्यकः । (१) आभ्यां वुञ् वा स्यात् । कौरवकः । (२) आभ्यां कन् स्यात् । मद्रकः । (३) कोपधादण् स्यात् । माहिषकः । (४) एभ्यो-देशवाचिभ्योऽण् स्यात् । काच्छः । (५) कच्छादिभ्यो वुञ् स्यात् मनुष्ये, तत्स्थे च जातादौ प्रत्ययार्थे । काच्छकाः । (६) साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम् अपदातावेव मनुष्यतत्स्थयोः साल्वाद्वुञ्। साल्वको ब्राह्मणः । (७) साल्वा-द्वुञ्स्याद्गोयवाग्वोरभिधेययोः । साल्वको गौः । (८) गर्त्तोत्तरपदा-देशवाचिनः छः स्यात् । वृकगर्त्तीयम् । (९) गहादिभ्यश्छः स्यात् । गहीयः । (१०) प्राग्देशवाचिनः कटादेश्छः स्यात् । कटनगरीयम् । (११) राज्ञः ककारोऽन्तादेशः स्याच्छप्रत्ययश्च । वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेश-मात्रं विधीयते । राजकीयम् । (१२) अक् इक् एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् । ब्राह्मण-कीयः । (१३) कन्थादिपञ्चकोत्तरपदा देशवाचिनो वृद्धाच्छः स्यात् । दाक्षि-कन्थीयम् । (१४) पर्वताच्छः स्यात् । पर्वतीयः ।

१४४ विभाषाऽमनुष्ये ।
१४५ कृकणपर्णाद्भारद्वाजे ।
[ 'तेनस्तास्मिन्ठञ्क्रमादि-श्योजनपदे द्युप्रागपाग्ध-न्ववृद्धात्पञ्च' ॥ ]

## अथ तृतीयः पादः ।

१ युष्मदस्मदोरन्यतरस्यां खञ् च ।
२ तस्मिन्नणि च युष्माकाऽस्माकौ ।
३ तवकममकावेकवचने ।
४ अर्धाद्यत् ।
५ परावराधमोत्तमपूर्वाच्च ।
६ दिक्पूर्वपदाट्ठञ् च ।
७ ग्रामजनपदैकदेशादञ्ठञौ ।
८ मध्यान्मः ।
९ अ सांप्रतिके ।

---

(१) मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्पक्षेऽण् । पार्वतानि फलानि । (२) भारद्वाजदेशवाचिभ्या माभ्यां छः । कृकणीयम् ।
इति चतुर्थाऽध्यायस्य द्वितीयः पादः

(३) आभ्यां खञ् स्याच्चाच्छः । युष्मदीयः । (४) युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः। (५) एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञ्यणि च । तावकीनः । (६) अर्द्धाद्यत्स्यात् । अर्द्ध्यम् । (७) एतत्पूर्वादर्द्धाद्यत्स्यात् । परार्द्ध्यम् । (८) दिक्पूर्वपदाट्ठञ् स्याच्चाद्यत् । पौर्वार्द्धिकम् । (९) ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । पौर्वार्धाः । (१०) मध्यान्मः स्यात् । मध्यमः । (११) मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे ।

१० द्वीपादनुसमुद्रं यञ् ।
११ कालाट्ठञ् ।
१२ श्राद्धे शरदः ।
१३ विभाषा रोगातपयोः ।
१४ निशाप्रदोषाभ्यां च ।
१५ श्वसस्तुट् च ।
१६ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।
१७ प्रावृष एण्यः ।
१८ वर्षाभ्यष्ठक् ।
१९ छन्दसि ठञ् ।
२० वसन्ताच्च ॥१॥
२१ हेमन्ताच्च ।
२२ सर्वत्राऽण् च तलोपश्च ।
२३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्य-
ष्ट्युट्युलौ तुट् च ।
२४ विभाषा पूर्वाह्णापराह्णाभ्याम्

मध्यो वैयाकरणः । (१) समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम् । (२) कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । (३) शरच्छब्दाट्ठञ्स्यात्, श्राद्धेऽभिधेये । शारदिकम् । (४) शरच्छब्दाट्ठञ् वा स्याद्रोगातपयोः । शारदिको रोगः । (५) निशाप्रदोषाभ्यां वा ठञ् स्यात् । नैशिकम् । (६) श्वःशब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च । शौवस्तिकः । (७) सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सान्धिवेलम् । (८) प्रावृट्शब्दादेण्यः स्यात् । प्रावृषेण्यः । (९) वर्षाभ्यष्ठक् स्यात् । वार्षिकम् । (१०) छन्दसि वर्षाभ्यष्ठञ् स्यात् । वार्षिकम् । (११) वसन्तशब्दाष्ठञ् स्याच्छन्दसि । वासन्तिकम् । (१२) हेमन्ताच्छन्दसि ठञ् । हैमन्तिकम् । (१३) हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । हैमनम् । (१४) सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायन्तनम् । (१५) आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च,

२५ तत्र जातः[१] ।
२६ प्रावृषष्ठप्[२] ।
२७ संज्ञायां[३] शरदो वुञ् ।
२८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषाऽवस्कराद्वुन्[४] ।
२९ पथः[५] पन्थ च ।
३० अमावास्याया[६] वा ।
३१ अ[७] च ।
३२ सिन्ध्वपकराभ्यां कन्[८] ।
३३ अणञौ[९] च ।
३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्[१०] ।
३५ स्थानान्तगोशालखरशालाच्च[११] ।
३६ वत्सशालाभिजिदश्वयुक्शतभिषजो[१२] वा ।
३७ नक्षत्रेभ्यो[१३] बहुलम् ।
३८ कृतलब्धक्रीतकुशलाः[१४] ।

पक्षेठञ् । पूर्वाह्णेतनम् । (१) सप्तमी समर्थाज्जातं इत्यर्थेऽणादयोघादयश्च स्युः । स्रौघ्नः । (२) प्रावृट् शब्दाट्ठप् स्यात् । प्रावृषिकः । (३) शरच्छब्दाद्वुञ् स्यात्सञ्ज्ञायाम् । शारदकाः (४) एभ्यो वुन् स्यात् । जातार्थे पूर्वाह्णकः । (५) पथिन्छब्दस्य पन्थादेशः स्याच्चाद्वुन् । पन्थकः । (६) अमावास्याया वुन् वा स्यात् । अमावास्यकः । (७) अमावास्याया अः स्याज्जातार्थे । अमावास्यः । (८) आभ्यां कन् स्यात् । सिन्धुकः । (९) सिन्ध्वपकराभ्यां क्रमादणञौ स्तः । सैन्धवः । (१०) एभ्यो नक्षत्रवाचिभ्यो जातार्थे प्रत्ययस्य लुक् स्यात् । श्रविष्ठः । (११) एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । (१२) एभ्यो जातार्थप्रत्ययस्य लुग्वा स्यात् । वत्सशालः । (१३) नक्षत्रेभ्यो जातार्थप्रत्ययस्य बहुलं लुक् । रोहिणः । (१४) सप्तम्यन्तात्क्रीतादिष्वर्थेषु प्रत्ययाः स्युः । स्रौघ्नः ।

३९ प्रायभवः[1]।

४० उपजानूपकर्णोपनीवेष्ठक्[2]।

४१ संभूते[3]।

४२ कोशाड्ढञ्[4]।

४३ कालात्साधुपुष्प्यत्पच्यमानेषु[5]।

४४ उप्ते च[6]।

४५ आश्वयुज्या वुञ्[7]।

४६ ग्रीष्मवसन्तादन्यतरस्याम्[8]।

४७ देयमृणे[9]।

४८ कलाप्यश्वत्थयवबुसाद्वुन्[10]।

४९ ग्रीष्मावरसमाद्वुञ्[11]।

५० संवत्सराग्रहायणीभ्यां ठञ् च[12]

५१ व्याहरति मृगः[13]।

(१) सप्तम्यन्तात्प्रायभव इत्यर्थे प्रत्ययाः स्युः। स्रौघ्नः। (२) एभ्यष्ठक् स्यादुक्तेऽर्थे। औपजानुकः। (३) सप्तम्यन्तात्सम्भूते इत्यर्थे यथाविहितं प्रत्ययाः स्युः। स्रौघ्नः। (४) सप्तम्यन्तादस्माड्ढञ् स्यादुक्तेऽर्थे। कौशेयम्। (५) कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययः स्यात्। हैमन्तः प्रावारः। (६) सप्तम्यन्तात्कालवाचिन उप्तेऽर्थे प्रत्ययः स्यात्। हैमन्ता यवाः। (७) आश्वयुज्या वुञ्स्यादुप्तेऽर्थे। आश्वयुजकाः। (८) आभ्यां वा वुञ्स्यात्। ग्रैष्मम्। (९) सप्तम्यन्तात्कालवाचिनो देयमित्यर्थे यथाविहितं प्रत्ययः स्यात्, यद्देयमृणं चेत्तद्भवति। मासिकम्। (१०) एभ्यः कालवाचिभ्यो वुन् स्यादुक्तेऽर्थे। कलापकम्। (११) आभ्यां वुञ्स्यादुक्तेऽर्थे। ग्रैष्मकम्। (१२) आभ्यां ठञ्स्याच्चाद्वुञ्। सांवत्सरिकम्। (१३) कालवाचिनः सप्तम्यन्ताद्व्याहरति इत्यर्थे अणादयः स्युर्यो व्याहरति स मृगश्चेत्। नैशः।

५२ तदस्य सोढम् ।
५३ तत्र भवः ।
५४ दिगादिभ्यो यत् ।
५५ शरीरावयवाच्च ।
५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।
५७ ग्रीवाभ्योऽण् च ।
५८ गम्भीराञ्ञ्यः ।
५९ अव्ययीभावाच्च ।
६० अन्तःपूर्वपदाट्ठञ् ॥३॥
६१ ग्रामात् पर्यनुपूर्वात् ।
६२ जिह्वामूलाङ्गुलेश्छः ।
६३ वर्गान्ताच्च ।
६४ अशब्दे यत्खावन्यतरस्याम् ।
६५ कर्णललाटात्कनलङ्कारे ।
६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।

(१) प्रथमान्तात्कालवाचिनोऽस्येति षष्ठ्यर्थे प्रत्ययः स्यात् यत्प्रथमासमर्थं सोढञ्चेत्तद्भवति । नैशः । (२) सप्तमीसमर्थाद्भव इत्यर्थे यथाविहितं प्रत्ययः स्यात् । स्रौघ्नः । (३) दिगादिभ्यो यत्स्यात् । दिश्यम् । (४) शरीरावयवाद्यत्स्यात् । दन्त्यम् । (५) दृत्यादिभ्यो ढञ् स्यात् । दार्त्तेयम् । (६) ग्रीवाशब्दादण् स्याच्चाड्ढञ् । ग्रैवेयम् । (७) अस्मात् ञ्यः स्यात् । गाम्भीर्यम् । (८) अस्माञ्ञ्यः स्यात् । पारिमुख्यम् । (९) अन्तःपूर्वपदादव्ययीभावाट्ठञ् स्यात् । अन्तर्वेश्मम् । (१०) पर्यनुपूर्वाद्ग्रामशब्दाट्ठञ् । पारिग्रामिकः । (११) एतयोश्छः स्यात् । जिह्वामूलीयम् । (१२) वर्गान्ताच्छः स्यात् । कवर्गीयम् । (१३) वर्गान्ताद्यत्खौ वा स्तः—अशब्दे । पक्षे पूर्वेण छः । मद्वर्ग्यः । (१४) कर्णललाटात्कन् स्यादलङ्कारे गम्ये । कर्णिका । (१५) षष्ठीसमर्थाद्व्याख्यातव्यनाम्नः प्रातिपदिकाद्व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति

६७ बह्वचोऽन्तोदात्ताट्ठञ् ।
६८ क्रतुयज्ञेभ्यश्च ।
६९ अध्यायेष्वेवर्षेः ।
७० पौरोडाशपुरोडाशात् ष्ठन् ।
७१ छन्दसो यदणौ ।
७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।
७३ अणृगयनादिभ्यः ।
७४ तत आगतः ।
७५ ठगायस्थानेभ्यः ।
७६ शुण्डिकादिभ्योऽण् ।
७७ विद्यायोनिसम्बन्धेभ्योवुञ् ।
७८ ऋतष्ठञ् ।

तत्र भवे चार्थे । सौपः । (१) बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद्भवव्याख्यानयोरर्थयोष्ठञ् स्यात् । पात्वणत्विकम् । (२) एभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोष्ठञ् स्यात् । आग्निष्टोमिकः । (३) ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाऽध्याये ठञ् स्यात् । वासिष्ठिकः । (४) आभ्यां भवव्याख्यानयोः ष्ठन् स्याद्, पुरोडाशसहचरितो मन्त्रः पुरोडाशः, स एव पौरोडाशः, ततः ष्ठन्—पौरोडाशिकः । (५) छन्दसो यदणौ स्तः । छन्दस्यः । (६) द्व्यजादिभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोष्ठक् स्यात् । ऐष्टिकः । (७) एभ्यो भवव्याख्यानयोरण् स्यात् । आर्गयनः । (८) पञ्चमीसमर्थादागत इत्यर्थे यथाविहितं प्रत्ययः स्यात् । स्रौघ्नः । (९) आयस्थानवाचिभ्यष्ठक् स्यादुक्तेऽर्थे । शौल्कशालिकः । (१०) शुण्डिकादिभ्योऽण् स्यात् । शौण्डिकः । (११) विद्यायोनिसम्बन्धवाचिभ्यो वुञ् स्यात् । औपाध्यायकः । (१२) ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यष्ठञ् स्यात् । हौतृकम् ।

७९ पितुर्यच्च ।
८० गोत्रादङ्कवत् ॥४॥
८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।
८२ मयट् च ।
८३ प्रभवति ।
८४ विदूराञ्ञ्यः ।
८५ तद्गच्छति पथिदूतयोः ।
८६ अभिनिष्क्रामति द्वारम् ।
८७ अधिकृत्य कृते ग्रन्थे ।
८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।
८९ सोऽस्य निवासः ।
९० अभिजनश्च ।
९१ आयुधजीविभ्यश्छः पर्वते ।

(१) पितुर्यत्स्याच्चाट्ठञ् । पित्र्यम् । (२) गोत्रप्रत्ययान्तात्प्रातिपदिकादङ्कवत्प्रत्ययाः स्युस्तत आगत इत्येतद्विषये। वैदम्। (३) हेतुमनुष्येभ्यो रूप्यप्रत्ययो वा स्यात् । समरूप्यम् । (४) हेतुमनुष्येभ्यो मयट् च स्यात्। सममयम् । (५) पञ्चम्यन्तात्प्रभवतीत्यर्थे यथाविहितं प्रत्ययः स्यात् । हैमवती। (६) विदूराञ् ञ्यः प्रत्ययः स्यादुक्तेऽर्थे। वैदूर्यः। (७) द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात् , योऽसौ गच्छति पन्थाश्चेत्स भवति, दूतो वा । स्रौघ्नः । (८) द्वितीयान्तादभिनिष्क्रामतीत्यर्थे प्रत्ययः स्यात् , यदभिनिष्क्रामति तद्द्वारञ्चेत् । स्रौघ्नम् । (९) द्वितीयान्तादधिकृत्य कृते इत्यर्थे प्रत्ययः स्यात् , यत्कृतं तच्चेद् ग्रन्थः स्यात् । शारीरकीयः। (१०) एभ्यश्छः स्यात् । शिशुक्रन्दीयः। (११) प्रथमान्तात्षष्ठ्यर्थे प्रत्ययः, यः प्रथमान्तार्थः स निवासश्चेत्। स्रौघ्नः। (१२) प्रथमान्तात्षष्ठ्यर्थे प्रत्ययः, यः प्रथमान्तार्थः सोऽभिजनश्चेत्। स्रौघ्नः। (१३) पर्वतवाचिनः प्रथमान्तादभि-

९२ शण्डिकादिभ्यो ञ्यः ।
९३ सिन्धुतक्षशिलादिभ्योऽणञौ ।
९४ तूदीशलातुरवर्मतीकूचवारा-
 ड्ढक्छण्ढञ्यकः ।
९५ भक्तिः ।
९६ अचित्तादेशकालाठ्ठक् ।
९७ महाराजाट्ठञ् ।
९८ वासुदेवार्जुनाभ्यां वुन् ।
९९ गोत्रक्षत्रियाख्येभ्यो बहुलं
 वुञ् ।
१०० जनपदिनां जनपदवत्
 सर्वं जनपदेन समानशब्दानां
 बहुवचने ॥५॥
१०१ तेन प्रोक्तम् ।
१०२ तित्तिरिवरतन्तुखण्डिको-
 खाच्छण् ।

जनशब्दादस्येत्यर्थे छः स्यात् । हृद्रोलीयाः । (१) शण्डिकादिभ्यो ञ्यः स्यात् । शाण्डिक्यः । (२)सिन्ध्वादिभ्योऽण्, तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे । सैन्धवः । (३) एभ्यो यथासङ्ख्यं ढगादयः स्युरभिजनेऽर्थे । तौदेयः।(४) प्रथमान्तात्षष्ठ्यर्थे प्रत्ययः यः प्रथमान्तार्थो भक्तिश्चेत्सा भवति । स्रौघ्नः । (५) देशकालव्यतिरिक्त-दचित्तवाचिनष्ठक् स्यादुक्तेऽर्थे । आपूपिकः । (६) अस्माट्ठञ्स्यादुक्तेऽर्थे । माहाराजिकः । (७) प्रथमान्ताभ्यामाभ्यां वुन् स्यादुक्तेऽर्थे । वासुदेवकः। (८) एभ्यो बहुलं वुञ्स्याद्भक्तिरित्यर्थे । ग्लौचुकायनकः । (९) जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्च' त्यत्र ये प्रत्यया विहितास्तेऽत्रातिदिश्यन्ते । आङ्गकः । (१०) तृतीयान्तात्प्रोक्तमित्यर्थे यथायथं प्रत्ययः स्यात् । पाणिनीयम् । (११) एभ्यश्छण् स्यात् ।

१०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।
१०४ कलापिवैशम्पायनान्तेवासिभ्यश्च ।
१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।
१०६ शौनकादिभ्यश्छन्दसि ।
१०७ कठचरकाल्लुक् ।
१०८ कलापिनोऽण् ।
१०९ छगलिनो ढिनुक् ।
११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।
१११ कर्मन्दकृशाश्वादिनिः ।
११२ तेनैकदिक् ।
११३ तसिश्च ।
११४ उरसो यच्च ।
११५ उपज्ञाते ।
११६ कृते ग्रन्थे ।

तैत्तिरीयाः । (१) आभ्यामृषिवाचिभ्यां णिनिः स्यात् । काश्यपिनः । (२) कलापिवैशम्पायनान्तेवासिवाचिभ्यो णिनिः स्यादुक्तेऽर्थे । हारिद्रविणः । (३) तृतीयान्तात्प्रोक्तार्थे णिनिः स्याद्यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति । भाल्लविनः । (४) छन्दस्यभिधेये एभ्यो णिनिः स्यात् । शौनकिनः । (५) आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठाः । (६) कलापिनोऽण् स्यात् । कालापाः । (७) अस्माड्ढिनुक् स्यात् । छागलेयिनः । (८) आभ्यां णिनिः स्याद्भिक्षुनटसूत्रयोरभिधेययोः । पाराशरिणः । (९) आभ्यामिनिः स्याद्भिक्षुनटसूत्रयोः । कर्मन्दिनः । (१०) तृतीयान्तादेकदिगित्यर्थे प्रत्ययः स्यात् । सौदामनी । (११) तृतीयान्तादेकदिगित्यर्थे तसिः स्यात् । पीलुमूलतः । (१२) तृतीयान्तादुरसो यत्स्यात्तसिश्च । उरस्यः । (१३) तृतीयान्तादुपज्ञाते इत्यर्थे प्रत्ययः स्यात् । पाणिनीयम् । (१४) तृतीया-

११७ संज्ञायाम् ।
११८ कुलालादिभ्यो वुञ् ।
११९ क्षुद्राभ्रमरवटरपादञ् ।
१२० तस्येदम् ॥६॥
१२१ रथाद्यत् ।
१२२ पत्रपूर्वादञ् ।
१२३ पत्राध्वर्युपरिषदश्च ।
१२४ हलसीराट्ठक् ।
१२५ द्वन्द्वाद्वुन् वैरमैथुनिकयोः ।
१२६ गोत्रचरणाद्वुञ् ।
१२७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।
१२८ शाकलाद्वा ।
१२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।
१३० न दण्डमाणवान्तेवासिषु ।

न्तात्कृते इत्यर्थे प्रत्ययः, यत्कृतं ग्रन्थश्चेत्स भवति । वाररुचः ।

(१) तृतीयान्तात्कृते इत्यर्थे प्रत्ययः, सञ्ज्ञायाम् । माक्षिकम् । (२) एभ्यो-वुञ् स्यात् । कौलालकम् । (३) एभ्योऽञ् स्यात् । क्षौद्रम् । (४) षष्ठ्यन्तादिदमित्यर्थे प्रत्ययः स्यात् । औपगवम् । (५) रथाद्य-त्स्यादिदमर्थे । रथ्यम् । (६) पत्र-पूर्वात्षष्ठ्यन्तादञ्स्यादिदमित्यर्थे । आश्वरथम् । (७) एभ्योऽञ्स्यात् । आध्वरम् । (८) हलसीराट्ठक् स्यात् । हालिकम् । (९) द्वन्द्वाद्वुन्स्याद्वैरे मैथुनिकायाञ्च । मैथुनिका=विवाहः । काकोलूकिका । (१०) आभ्यां वुञ्स्यात् । औपगवकम् । (११)अञ-न्ताद्यञन्तादिञन्ताच्च प्रातिपदिकादण्स्या-त्तस्येदमित्यर्थे, सङ्घादिषु प्रत्ययार्थ-विशेषणेषु । वैदः । (१२) अण् वा स्यादुक्तेऽर्थे । पक्षे चरणत्वाद्वुञ् । शाकलः । १३) एभ्यो ञ्यः स्यात् । छान्दोग्यम् । (१४) दण्डप्रधाना माणवा दण्डमाणवास्तेपु शिष्येपु च

१३१ रैवतिकादिभ्यश्छः ।
[१३२ कौपिञ्जलहास्तिपदादण् ।
१३३ आथर्वणिकस्येकलोपश्च ।]
१३४ तस्य विकारः ।
१३५ अवयवे च प्राण्योषधिवृक्षेभ्यः
१३६ बिल्वादिभ्योऽण् ।
१३७ कोपधाच्च ।
१३८ त्रपुजतुनोः षुक् ।
१३९ ओरञ् ।
१४० अनुदात्तादेश्च ॥७॥
१४१ पलाशादिभ्यो वा ।
१४२ शम्याः ष्लञ् ।
१४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।
१४४ नित्यं वृद्धशरादिभ्यः ।
१४५ गोश्च पुरीषे ।

वुञ् न स्यात् । दाक्षाः । (१) एभ्यश्छः स्यात्तस्येदमित्यर्थे । रैवतिकीयः । (२–३) इदं वार्तिकद्वयं सूत्रेषु कैश्चित्प्रक्षिप्तम् । (४) षष्ठ्यन्ताद्विकारेऽणादयः स्युः । आश्मः । (५) प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च वक्ष्यमाणाः प्रत्ययाः स्युः । मायूरः । (६) बिल्वादिभ्योऽण् स्यादुक्तयोरर्थयोः । बैल्वम् । (७) कोपधादण् स्यात् । तार्कवम् । (८) आभ्यामण् स्याद्विकारे, एतयोः पुगागमश्च । त्रापुषम् । (९) उवर्णान्तादञ् स्यात् । दैवदारवम् । (१०) अनुदात्तादेरञ् स्याद्विकारावयवयोः । दाधित्थम् । (११) पलाशादिभ्योऽञ् वा स्यात् । पालाशम् । (१२) शम्याः ष्लञ् स्यात् । शामीलम् । (१३) प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । अश्ममयम् । (१४) एभ्यो नित्यं मयट् स्याद्भाषायामभक्ष्याच्छादनयोर्विकारावयवयोः । आम्रमयम् । (१५) गोर्मयट् स्यात् पुरीषेऽभिधेये । गोमयम् ।

१४६ पिं[1]ष्टाच्च च ।
१४७ सं[2]ज्ञायां कन् ।
१४८ व्री[3]हेः पुरोडाशे ।
१४९ अ[4]संज्ञायां तिलयवाभ्याम् ।
१५० द्व्य[5]चश्छन्दसि ।
१५१ नो[6]त्वद्वर्ध्रबिल्वात् ।
१५२ ता[7]लादिभ्योऽण् ।
१५३ जा[8]तरूपेभ्यः परिमाणे ।
१५४ प्रा[9]णिरजतादिभ्योऽञ् ।
१५५ ञि[10]तश्च तत्प्रत्ययात् ।
१५६ क्री[11]तवत् परिमाणात् ।
१५७ उ[12]ष्ट्राद्वुञ् ।
१५८ उ[13]मोर्णयोर्वा ।
१५९ ए[14]ण्या ढञ् ।

(१)अस्मान्नित्यं मयट्स्याद्विकारे। पिष्टमयम् । (२) पिष्टात्कन्स्याद्विकारे संज्ञायाम् । पिष्टकः । (३) व्रीहिशब्दान्मयट् स्यात्पुरोडाशे, विकारे । व्रीहिमयः । (४) आभ्यां मयट् स्यादसञ्ज्ञायां विकारावयवयोः । तिलमयम् । (५) द्व्यचश्छन्दसि विकारे मयट् स्यात् । शरमयम् । (६) एभ्यो मयण्न । मौञ्जं शिक्यम् । (७) तालादिभ्योऽण् स्याद्विकारावयवयोः । तालं धनुः । (८) जातरूपवाचिभ्योऽण् स्यात्परिमाणे । हाटकः । (९) एभ्योऽञ् स्याद्विकाराऽवयवयोः । शौकम् । (१०) ञितो विकाराऽवयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः। शामीलम्। (११) प्राग्वहतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते । नैष्किकम् । (१२) उष्ट्राद्वुञ् स्याद्विकारावयवयोः । औष्ट्रकः । (१३) आभ्यां वुञ्स्याद्विकारावयवयोः। औमम् । (१४)एणीशब्दाड्ढञ् स्या-

१६० गोपयसोर्यत् ॥८॥
१६१ द्रोश्च ।
१६२ माने वयः ।
१६३ फले लुक् ।
१६४ प्लक्षादिभ्योऽण् ।
१६५ जम्ब्वा वा ।
१६६ लुप् च ।
१६७ हरीतक्यादिभ्यश्च ।
१६८ कंसीयपरशव्ययोर्यञञौ लुक्च ।

[ 'युष्मद्धेमन्तात्संभूते ग्रामाद्धेतुतेन रथात्पलाशादिभ्यो द्रोश्चाष्टौ' ॥ ]

## अथ चतुर्थः पादः ।

१ प्राग्वहतेष्ठक् ।
२ तेन दीव्यति खनति जयति जितम् ।
३ संस्कृतम् ।

देतयोरर्थयोः । ऐणयम् । (१) आभ्यां यत्स्याद्विकारावयवयोः । गव्यम् । (२) द्रोर्यत्स्याद्विकारावयवयोः । (३) द्रुशब्दान्माने विकारविशेषे च वयः प्रत्ययः स्यात् । द्रुवयम् । (४) विकाराऽवयवयोः प्रत्ययस्य लुक् फले । आमलकम् । (५) एभ्योऽण् स्यात् फल । विधानसामर्थ्यान्न लुक् । प्लाक्षम् । (६) जम्बूशब्दात्फलेऽञ् वा स्यात् । जाम्बवम् । (७) जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात् । जम्बूः । (८) एभ्यः फलप्रत्ययस्य लुप्स्यात् । हरीतक्यः । (९) कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक् । कांस्यम् ।

इति चतुर्थाध्यायस्य तृतीयः पादः ।

(१०) तद्वहतीत्यतः प्राक् ठगधिक्रियते । (११) तृतीयान्तादेष्वर्थेषु ठक् स्यात् । आक्षिकः । (१२) तृतीयान्तात्संस्कृत-

४ कुलत्थकोपधादण् ।
५ तरति ।
६ गोपुच्छाट्ठञ् ।
७ नौद्व्यचष्ठन् ।
८ चरति ।
९ आकर्षात् ष्ठल् ।
१० पर्पादिभ्यः ष्ठन् ।
११ श्वगणाट्ठञ् च ।
१२ वेतनादिभ्यो जीवति ।
१३ वस्नक्रयविक्रयाट्ठन् ।
१४ आयुधाच्छ च ।
१५ हरत्युत्सङ्गादिभ्यः ।
१६ भस्त्रादिभ्यः ष्ठन् ।
१७ विभाषा विवधात् ।
१८ अण् कुटिलिकायाः ।

मित्यर्थे ठक् स्यात् । दाधिकम् । (१) कुलत्थशब्दात्कोपधाच्च संस्कृतमित्यर्थेऽण् स्यात् । कौलत्थम् । (२) तृतीयान्तात्तरतीत्यर्थे ठक् । औडुपिकः । (३) अस्माट्ठञ् स्यात्तरतीत्यर्थे । गौपुच्छिकः । (४) नौशब्दात् द्व्यचश्च ठन् स्यात्तरतीत्यर्थे । नाविकः । (५) तृतीयान्ताद्गच्छतिभक्षयतीत्यर्थयोष्ठक् । हास्तिकः । (६) आकर्षात्ष्ठल् स्याच्चरतीत्यर्थे । आकर्षिकः । (७) पर्पादिभ्यः ष्ठन् स्यात् । पर्पिकः । (८) अस्माट्ठञ्स्याच्चात्ष्ठन् । श्वागणिकः । (९) तृतीयान्तेभ्यो वेतनादिभ्यो जीवतीत्यर्थे ठक् । वैतनिकः । (१०) तृतीयान्ताभ्यामाभ्यां ठन् स्याज्जीवतीत्येतस्मिन् विषये । वस्निकः । (११) अस्माच्छः स्यात्, ठन्प्रत्ययश्च । आयुधीयः । (१२) तृतीयान्तेभ्य एभ्यो हरतीत्यर्थे ठक् । औत्सङ्गिकः । (१३) एभ्यो हरतीत्यर्थे ष्ठन् स्यात् । भस्त्रिकः । (१४) तृतीयान्ताभ्यामाभ्यां ष्ठन् वा; पक्ष ठक् । विवधिकः । (१५) अस्मात्तृतीयासमर्थादण् हरतीत्यर्थे ।

१९ निर्वृत्तेऽक्षद्यूतादिभ्यः ।
२० क्त्रेर्मम्नित्यम् ॥१॥
२१ अपमित्ययाचिताभ्यां कक्कनौ ।
२२ संसृष्टे ।
२३ चूर्णादिनिः ।
२४ लवणाल्लुक् ।
२५ मुद्गादण् ।
२६ व्यञ्जनैरुपसिक्ते ।
२७ ओजःसहोऽम्भसा वर्तते ।
२८ तत्प्रत्यनुपूर्वमीपलोमकूलम् ।
२९ परिमुखं च ।
३० प्रयच्छति गर्ह्यम् ।
३१ कुसीददशैकादशात् ष्ठन्ष्ठचौ ।
३२ उञ्छति ।

कौटिलिकः । (१) तृतीयान्तेभ्य एभ्यो निवृत्त इत्यर्थे ठक् । आक्षद्यूतिकम् । (२) क्त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम् । कृत्रिमम् । (३) आभ्यां यथासङ्ख्यं कक्कनौ स्तो निर्वृत्तेऽर्थे । आपमित्यकम् । (४) तृतीयान्तात्संसृष्टे इत्यर्थे ठक् । दाधिकम् । (५) चूर्णादिनिः संसृष्टेऽर्थे । चूर्णिनः । (६) लवणाठ्ठको लुक् संसृष्टे । लवणः । (७) मुद्गादण् संसृष्टे । मौद्गः । (८) एभ्य उपसिक्ते ठक् । दाधिकम् । (९) एभ्यस्तृतीयान्तेभ्यो वर्तते इत्यर्थे ठक् । औजसिकः । (१०) द्वितीयान्तादस्माद्वर्तते इत्यस्मिन्नर्थे ठक् स्यात् । प्रातीपिकः । (११) द्वितीयान्तादस्माद्वर्तते इत्यर्थे ठक् । पारिमुखिकः । (१२) द्वितीयान्तात्प्रयच्छत्यर्थे ठक्, यत्प्रयच्छति गर्ह्यं चेत्तद्भवति । द्वैगुणिकः । (१३) गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे । कुसीदिकः । (१४) द्वितीयान्तादुञ्छतीत्यर्थे ठक् ।

३३ रक्षति[१] ।
३४ शब्ददर्दुरं करोति[२] ।
३५ पक्षिमत्स्यमृगान् हन्ति[३] ।
३६ परिपन्थं च तिष्ठति[४] ।
३७ माथोत्तरपदपदव्यनुपदं धावति[५] ।
३८ आक्रन्दाट्ठञ्‌ च[६] ।
३९ पदोत्तरपदं गृह्णाति[७] ।
४० प्रतिकण्ठार्थललामं च[८] ॥२॥

४१ धर्मं चरति[९] ।
४२ प्रतिपथमेति ठंश्च[१०] ।
४३ समवायान् समवैति[११] ।
४४ परिषदो ण्यः[१२] ।
४५ सेनाया वा[१३] ।
४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति[१४] ।
४७ तस्य धर्म्यम्[१५] ।

बादरिकः । (१) द्वितीयान्ताद्रक्षतीत्यर्थे ठक् । सामाजिकः । (२) द्वितीयान्ताभ्यामाभ्यां करोतीत्यर्थे ठक् शाब्दिकः । (३) एभ्यो हन्तीत्यर्थे ठक् । पाक्षिकः । (४) अस्माद् द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् पारिपन्थिकः । (५) एभ्यो धावतीत्यर्थे ठक् । दाण्डमाथिकः । (६) अस्माट्ठञ् स्याच्चाट्ठक् धावतीत्यर्थे । आक्रन्दिकः । (७) अस्माद्गृह्णातीत्यर्थे ठक् । पौर्वपदिकः । (८) एभ्यो गृह्णातीत्यर्थे ठक् । प्रातिकण्ठिकः । (९) अस्माच्चरतीत्यर्थे ठक् । धार्मिकः । (१०) अस्मादेतीत्यर्थे ठन् स्याच्चाट्ठक् । प्रतिपथिकः । (११) समवायवाचिभ्यो द्वितीयान्तेभ्यः समवैतीत्यर्थे ठक् । सामवायिकः । (१२) अस्माण्ण्यः स्यादुक्तेऽर्थे । पारिषद्यः । (१३) ण्यः स्यात्पक्षे ठक् । सैन्याः । (१४) आभ्यां पश्यतीत्यर्थे ठक् सञ्ज्ञायाम् । लालाटिकः । (१५) षष्ठ्यन्ताद्धर्म्यमित्यर्थे ठक् ।

४८ अण् महिष्यादिभ्यः[1] ।
४९ ऋतोऽञ्[2] ।
५० अवक्रयः[3] ।
५१ तदस्य पण्यम्[4] ।
५२ लवणाट्ठञ्[5] ।
५३ किसरादिभ्यः ष्ठन्[6] ।
५४ शलालुनोऽन्यतरस्याम्[7] ।
५५ शिल्पम्[8] ।
५६ मड्डुकझर्झरादणन्यतरस्याम्[9][10] ।
५७ प्रहरणम्[10] ।
५८ परश्वधाट्ठञ् च[11] ।
५९ शक्तियष्ट्योरीकक्[12] ।
६० अस्तिनास्तिदिष्टं मतिः[13] ॥३॥
६१ शीलम्[14] ।

आपणिकम् । (१) महिष्यादिभ्योऽण् स्यादुक्तेऽर्थे । माहिषम् । (२) ऋकारान्तादञ् स्यादुक्तेऽर्थे । यात्रम् । (३) षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे । आपणिकः । (४) प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात्, यत्प्रथमान्तं पण्यं चेत्तद्भवति । आपूपिकः । (५) लवणाट्ठञ्स्यादुक्तेऽर्थे । लावणिकः । (६) एभ्यः ष्ठन् स्यादुक्तेऽर्थे । किसरिकः । (७) अस्मात्ष्ठन्स्यात्पक्षे ठक् । शलालुकः । (८) प्रथमान्तादस्येतिषष्ठ्यर्थे ठक् स्यात्, यत्प्रथमान्तं शिल्पं, चेत्तद्भवति । मार्दङ्गिकः । (९) आभ्यामण् वा स्यादुक्तेऽर्थे । माड्डुकः । (१०) प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात्, यत्प्रथमान्तं प्रहरणं चेत्तद्भवति । आसिकः । (११) अस्माट्ठञ् स्याच्चाट्ठक् । पारश्वधिकः । (१२) आभ्यामीकक् स्यादुक्तेऽर्थे । शाक्तीकः । (१३) प्रथमान्तेभ्योऽस्तिनास्तिदिष्टेभ्योऽस्येतिषष्ठ्यर्थे ठक् स्यात् यत्प्रथमान्तं मतिश्चेत्सा भवति । आस्तिकः । (१४) प्रथमान्तादस्येति षष्ठ्यर्थे ठक्

६२ छत्रादिभ्यो णः ।
६३ कर्माध्ययने वृत्तम् ।
६४ बह्वच्पूर्वपदाट्ठच् ।
६५ हितं भक्षाः ।
६६ तदस्मै दीयते नियुक्तम् ।
६७ श्राणामांसौदनाट्टिठन् ।
६८ भक्तादणन्यतरस्याम् ।
६९ तत्र नियुक्तः ।
७० अगारान्ताट्ठन् ।
७१ अध्यायिन्यदेशकालात् ।
७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।
७३ निकटे वसति ।
७४ आवसथात् छल् ।

स्यात्, यत्प्रथमान्तं शीलं चेद्भवति । आपूपिकः । ( १ ) एभ्यो णः स्यादुक्तेर्थे । छात्रः । ( २ ) प्रथमान्तात्ष ष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । ऐकान्यिकः । ( ३ ) अस्मात् ठक् स्यादुक्तेर्थे । द्वादशान्यिकः । ( ४ ) प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात्, यत्प्रथमान्तं हितं चेत्तद्भवति । आपूपिकः । ( ५ ) प्रथमान्ताच्चतुर्थ्यर्थे ठक् स्यात्, यत्प्रथमान्तं तच्चेद्दीयते नियुक्तम् । अव्यभिचारेण दीयत इत्यर्थः । आग्रभोजनिकः । ( ६ ) आभ्यां टिठन् स्यादुक्तेर्थे । श्राणिकः । ( ७ ) भक्तादण् वा स्यादुक्तेऽर्थे । पक्षे ठक् । भाक्तः । ( ८ ) सप्तमीसमर्थान्नियुक्त इत्यर्थे ठक् । आकरिकः । ( ९ ) अस्माट्ठन् स्यादुक्तेऽर्थे । देवागारिकः । ( १० ) निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि । श्माशानिकः । ( ११ ) कठिनशब्दान्तात्सप्तमीसमर्थात्प्रस्तारसंस्थानशब्दाभ्याञ्च ठक् स्याद्व्यवहरतीत्यर्थे । वांशकठिनिकः । ( १२ ) सप्तमीसमर्थान्निकटशब्दाद्वसतीत्यर्थे ठक् । नैकटिकः । ( १३ ) सप्तम्यन्तादस्माद्वसतीत्यर्थे छल् ।

७५ प्रा[1]ग्घिताद्यत् ।
७६ तद्वहति[2] रथयुगप्रासङ्गम् ।
७७ धुरो[3] यड्ढकौ ।
७८ खः[4] सर्वधुरात् ।
७९ एकधुराल्लुक्[5] च ।
८० शकटादण्[6] ॥ ४ ॥
८१ हलसीराट्ठक्[7] ।
८२ संज्ञायां[8] जन्या ।
८३ विध्यत्यधनुषा[9] ।
८४ धनगणं[10] लब्धा ।
८५ अन्नाण्णः[11] ।
८६ वशं[12] गतः ।
८७ पदमस्मिन्दृश्यम्[13] ।
८८ मूलमस्याऽऽबर्हि[14] ।
८९ संज्ञायां[15] धेनुष्या ।

आवसथिकः । (१) 'तस्मै हित'मित्यतः प्राक् यदधिक्रियते । (२) द्वितीयान्तेभ्यो रथादिभ्यो वहतीत्यर्थे यत्स्यात् । रथ्यः । (३) द्वितीयान्ताद्धुरो वहती त्यर्थे यड्ढकौ स्तः । धुर्यः । (४) द्वितीयान्तात्सर्वधुराशब्दात्खः स्याद्वहतीत्यर्थे सर्वधुरीणः । (५) एकधुराशब्दा द्वितीयान्ताद्वहतीत्यर्थे खः स्याल्लुक् च । एकधुरीणः । (६) शकटादण् स्यादुक्तेऽर्थे । शाकटः । (७) आभ्यां ठक् स्यादुक्तेऽर्थे । हालिकः । (८) द्वितीयान्ताज्जनीशब्दाद्वहतीत्यर्थे यत्स्यात्संज्ञायाम् । (९) द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः करणम् । पद्याः । (१०) आभ्यां द्वितीयान्ताभ्यां लब्धेत्यर्थे यत् । धन्यः । (११) अन्नशब्दादुक्तेऽर्थे णः स्यात् । आन्नः । (१२) वशशब्दात् द्वितीयान्ताद्गत इत्यर्थे यत्स्यात् । वश्यः । (१३) प्रथमान्तात्पदशब्दात् दृश्योपाधिकादस्मिन्निति सप्तम्यर्थे यत्स्यात् । पद्यः । (१४) प्रथमान्तात् आबर्हीत्युपाधिकान्मूलशब्दादस्येतिषष्ठ्यर्थे यत् । (१५) धेनुशब्दस्य पुगागमो यत्प्रत्ययश्च स्वार्थे निपात्यते

९० गृहपतिना संयुक्ते ञ्यः ।
९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ।
९२ धर्मपथ्यर्थन्यायादनपेते ।
९३ छन्दसो निर्मिते ।
९४ उरसोऽण् च ।
९५ हृदयस्य प्रियः ।
९६ बन्धने चर्षौ ।
९७ मतजनहलात्करणजल्पकर्षेषु ।
९८ तत्र साधुः ।
९९ प्रतिजनादिभ्यः खञ् ।
१०० भक्ताण्णः ॥ ५ ॥
१०१ परिषदो ण्यः ।
१०२ कथादिभ्यष्ठक् ।
१०३ गुडादिभ्यष्ठञ् ।

सज्ञायाम् । धेनुष्या । (१) तृतीयान्ताद्गृहपतिशब्दात्संयुक्त इत्यर्थे ञ्यः स्यात् । गार्हपत्यः । (२) नावादिभ्योऽष्टभ्यस्तारादिष्वर्थेषु यथासङ्ख्यं यत्स्यात् । नाव्यम् । (३) पञ्चम्यन्तेभ्य एभ्यो यत्स्यादनपेतेऽर्थे । धर्म्यम् । (४) तृतीयान्ताच्छन्दश्शब्दाद्यत्स्यान्निर्मितेऽर्थे । छन्दस्यम् । (५) उरसोऽण् स्यात् । चाद्यत् । औरसः । उरस्यः (६) हृदयशब्दात्षष्ठ्यन्ताद्यत्स्यात्प्रियेऽर्थे । हृद्यो देशः । (७) हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यत्स्याद्वेदेऽभिधेये । हृद्यो मन्त्रः । (८) मतादिभ्यः करणादिष्वर्थेषु यथासङ्ख्यं यत् । मत्यः । (९) सप्तम्यन्ताद्यत्स्यात्साधुरित्यर्थे । अग्र्यः । (१०) एभ्यः खञ् स्यात्तत्र साधुरित्यर्थे । प्रातिजनीनः । (११) भक्ताण्णः स्यादुक्तेऽर्थे । भाक्तः । (१२) परिषदो ण्यः स्याण्णोऽपि । पारिषद्यः । (१३) एभ्यष्ठक् स्यादुक्तेऽर्थे । काथिकः । (१४) एभ्यष्ठञ् । गौडिकः ।

१०४ पथ्यतिथिवसतिस्वपते-[१]ढञ् ।
१०५ [२]सभाया यः ।
१०६ [३]ढश्छन्दसि ।
१०७ [४]समानतीर्थे वासी ।
१०८ [५]समानोदरे शयित ओ चोदात्तः ।
१०९ [६]सोदराद्यः ।
११० भवे [७]छन्दसि ।
१११ पाथोनदीभ्यां ड्यण् ।
११२ वैशन्तहिमवद्भ्यामण् ।
११३ स्रोत[१०]सो विभाषा ड्यड्ड्यौ
११४ [११]सगर्भसयूथसनुताद्यन् ।
११५ [१२]तुग्राद्घन् ।
११६ [१३]अग्राद्यत् ।
११७ [१४]घच्छौ च ।
११८ [१५]समुद्राभ्राद्घः ।
११९ [१६]बर्हिषि दत्तम् ।

(१) पथ्यो ढञ् । पाथेयम् । (२) सभाया यः स्यात्तत्र साधुरित्यर्थे । सभ्यः । (३) अस्माड्ढः स्याच्छन्दसि । सभेयः । (४) सप्तम्यन्तात्समानतीर्थशब्दाद्वासीत्यर्थे यत् । सतीर्थ्यः । (५) समानोदरात्सप्तम्यन्ताच्छयितइत्यर्थे यत् । ओकारश्चोदात्तः । समानोदर्यः । (६) सप्तम्यन्तात्सोदराद्यः स्याच्छयित इत्यर्थे । सोदर्यः । (७) सप्तम्यन्ताद्भवार्थे यत्स्याद्वेदे । मेध्याय च विद्युत्याय च । (८) आभ्यां ड्यण् वेदे । पाथ्यः । (९) सप्तम्यन्ताभ्यामाभ्यामण्स्याद्भवेऽर्थे । वैशन्तीभ्यः । (१०) अस्माद्विभाषा ड्यत्-ड्यौ स्तः । स्रोत्यः । (११) एभ्यो यन्स्याद्भवेऽर्थे । सगर्भ्यः । (१२) तुग्राद्घन् स्याद्भवेऽर्थे । पक्षे यदपि । तुग्र्यासु (१३) अग्राद्यत्स्याद्भवऽर्थे । अग्र्यः । (१४) अग्राद्घच्छौ स्तः । चाद्यत् । अग्रियः । (१५) आभ्यां घः स्यादुक्तेऽर्थे वेदे । समुद्रियाः । (१६) सप्तम्यन्ताद्बर्हिष्शब्दाद्दत्तमित्यर्थे यत्स्याद्वेदे ।

१२० दूतस्य भागकर्मणी ॥६॥
१२१ रक्षोयातूनां हननी ।
१२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये ।
१२३ असुरस्य स्वम् ।
१२४ मायायामण् ।
१२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ।
१२६ अश्विमानण् ।
१२७ वयस्यासु मूर्ध्नो मतुप् ।
१२८ मत्वर्थे मासतन्वोः ।
१२९ मधोर्ञ च
१३० ओजसोऽहनि यत्खौ ।

बर्हिष्येषु । (१) दूतशब्दात्षष्ठीसमर्थाद्भागे कर्मणि च यत् । दूत्यम् । (२) षष्ठ्यन्ताभ्यामाभ्यां हननीत्यर्थे यत् । रक्षस्या तनूः । (३) एभ्यः प्रशंसने यत् स्यात् । रेवत्यम् । (४) असुरशब्दात्षष्ठ्यन्तात्स्वमित्यर्थे यत् । असुर्यम् । (५) असु शब्दादण् मायायाम् । आसुरी । (६) मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्, यत्प्रथमान्तमुपधानो मन्त्रश्चेत्स भवति । यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । मतोश्च लुक् । वर्चस्याः । (७) प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थेऽण् । यत्प्रथमानिर्दिष्टमुपधानो मन्त्रश्चेत्स भवति । यत्तदासामिति निर्दिष्टा इष्टकाश्चेत्ता भवन्ति । मतोश्च लुक् । आश्विनीः । (८) मतुबन्तो यो मूर्धशब्दस्ततो मतुप्स्यात्प्रथमस्य मतोर्लुक् च वयश्शब्दवन्मन्त्रोपधेयास्विष्टकासु । मूर्धन्वतीरुपदधाति । (९) आसन्नर्थे प्रथमान्ताद्यत्स्यान्मासतन्वोरभिधेययोः । नभस्यो मासः । (१०) मधुशब्दान्मत्वर्थे ञः स्याच्चाद्यत् । माधवः । (११) ओजश्शब्दान्मत्वर्थे यत्खौ स्तोऽहन्यभिधेये । ओजस्यमहः ।

१३१ वेशोयशआदेर्भगाद्यल् ।
१३२ खं च ।
१३३ पूर्वैः कृतमिनयौ च ।
१३४ अद्भिः संस्कृतम् ।
१३५ सहस्रेण संमितौ घः ।
१३६ मतौ च ।
१३७ सोममर्हति यः ।
१३८ मये च ।
१३९ मधोः ।
१४० वसोः समूहे च ॥७॥
१४१ नक्षत्राद्घः ।
१४२ सर्वदेवात्तातिल् ।
१४३ शिवशमरिष्टस्य करे ।
१४४ भावे च ।

[ 'प्राग्वहतेरपमित्यधर्मे शीलं हलपरिषदो रक्षो- नक्षत्राच्चत्वारि' ॥ ]

(१–२) वेशोयश आदेर्भगाद्यल्खौ स्तोमत्वर्थे। वेशोभग्यः। क्वचिदत्र योग विभागः। (३) तृतीयासमर्थात्पूर्वशब्दा-त्कृतमित्यर्थे इनियौ स्तः, चाद्यत्खौ। पूर्वी-णभिः।(४) तृतीयान्तादप्शब्दात्संस्कृत-मित्यर्थे यत्। अप्यम्।(५) तृतीयान्ता-त्सहस्रशब्दात्सम्मितमित्यर्थे घः। सहस्रियासः। (६) सहस्रशब्दा-न्मत्वर्थे घः स्यात्। सहस्रियः। (७) द्वितीयान्तात्सोमशब्दादर्हतीत्यर्थे यः स्यात्। सोम्यः। (८) सोम-शब्दाद्यः स्यान्मयडर्थे। सोम्यम्। (९) मधुशब्दान्मयडर्थे यत्स्यात्। मधव्यः। (१०) वसुशब्दात्समूहे यत्स्यात्, चान्मयडर्थे। वसव्यः। (११) नक्षत्राद्घः स्यात्स्वार्थे। नक्षत्रि-येभ्यः स्वाहा। (१२) आभ्यां तातिल् स्याच्छन्दसि स्वार्थे। सर्व-तातिम्। (१३) षष्ठ्यन्तेभ्यः शिवा-दिभ्यः करे इत्यर्थे तातिल्। शिव-तातिः। (१४) शिवादिभ्यो भावे तातिल् स्याच्छन्दसि। शिवतातिः।

* इति चतुर्थाध्यायस्य चतुर्थःपादः *

# अथ पञ्चमोऽध्यायः ।

## प्रथमः पादः ।

१ प्राक् क्रीताच्छः ।
२ उगवादिभ्यो यत् ।
३ कम्बलाच्च संज्ञायाम् ।
४ विभाषा हविरपूपादिभ्यः ।
५ तस्मै हितम् ।
६ शरीरावयवाद्यत् ।
७ खलयवमाषतिलवृषब्रह्मणश्च ।
८ अजाविभ्यां थ्यन् ।
९ आत्मन्विश्वजनभोगोत्तरपदात् खः ।
१० सर्वपुरुषाभ्यां णढञौ ।
११ माणवकचरकाभ्यां खञ् ।
१२ तदर्थं विकृतेः प्रकृतौ ।
१३ छदिरुपधिबलेर्ढञ् ।
१४ ऋषभोपानहोर्ञ्यः ।

(१) 'तेन क्रीत'मित्यतः प्राक् छोऽधिक्रियते । (२) उवर्णान्ताद्गवादिभ्यश्च यत्स्यात् । (३) कम्बलशब्दाद्यत्स्यात्सञ्ज्ञायाम् । कम्बल्यम् । (४) हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च यद्वा स्यात् । आमिक्ष्यं दधि । (५) तस्मा इति चतुर्थीसमर्थाद्धितमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । वत्सीयः । (६) शरीराऽवयववाचिनः प्रातिपदिकाद्यत्स्यात् । दन्त्यम् । (७) खलादिभ्यो यत्स्यात् । खल्यम् । (८) आभ्यां थ्यन् स्यात् । अजथ्या यूथिः । (९) आभ्यां भोगोत्तरपदाच्च खः स्यात् । आत्मनीनम् । (१०) सर्वपुरुषाभ्यां यथासङ्ख्यं णढञौ स्तः । सार्वम् । (११) आभ्यां खञ् स्यात् । माणवकीनम् । (१२) विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छप्रत्ययः स्यात् । अङ्गारीयाणि काष्ठानि । (१३) छदिरादिभ्यो ढञ् स्यात् । छादिषेयाणि । (१४) आभ्यां ञ्यः स्यात् । आर्षभ्यो वत्सः ।

१५ चर्मणोऽञ् ।
१६ तदस्य तदस्मिन् स्यादिति ।
१७ परिखाया ढञ् ।
१८ प्राग्वतेष्ठञ् ।
१९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ।
२० असमासे निष्कादिभ्यः ।
२१ शताच्च ठन्यतावशते ॥१॥
२२ संख्याया अतिशदन्तायाः कन् ।
२३ वतोरिड्वा ।
२४ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ।
२५ कंसाट्टिठन् ।
२६ शूर्पादञन्यतरस्याम् ।

(१) चर्मणो या विकृतिस्तद्वाचकादञ् स्यात् । वार्ध्रं चर्म । (२) प्रथमासमर्थात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययः स्यात् । प्राकारीया इष्टकाः । (३) परिखाशब्दात् ढञ् स्यात् । पारिखेयी भूमिः । (४) 'तेन तुल्य'मिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते । (५) 'तदर्हती'त्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा । (६) 'आर्हा' दित्येतत्तेन क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । नैष्किकम् । (७) शतशब्दाट्ठन्यतौ स्तोऽशतेऽभिधेये । शतिकम् । शत्यम् । (८) संख्यायाः कन् स्यादार्हीयेऽर्थे नतु त्यन्तशदन्तायाः । पञ्चकः । (९) वत्वन्तात्कन इड्वा स्यात् । तावतिकः । (१०) योगविभागः कर्तव्यः । आभ्यां कन् स्यात् । असञ्ज्ञायां ड्वुन् स्यात्कनोऽपवादः । विंशकः । सञ्ज्ञायान्तु—विंशतिकः । (११) कंसशब्दाट्टिठन् स्यात् । कंसिकः । (१२) शूर्पशब्दादञ् वा

२७ शतमानविंशतिकसहस्रवसनादण् ।
२८ अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम् ।
२९ विभाषा कार्षापणसहस्राभ्याम् ।
३० द्वित्रिपूर्वान्निष्कात् ।
३१ बिस्ताच्च ।
३२ विंशतिकात् खः ।
३३ खार्या ईकन् ।
३४ पणपादमाषशताद्यत् ।
३५ शाणाद्वा ।
३६ द्वित्रिपूर्वादण् च ।
३७ तेन क्रीतम् ।
३८ तस्य निमित्तं संयोगोत्पातौ ।

स्यात् । शौपम् । (१) एभ्योऽण् स्यात् । ठञ्ठकनामपवादः । शातमानम् । (२) अध्यर्धपूर्वाद्द्विगोश्च परस्याऽऽर्हीयस्य लुक् स्यात् । अध्यर्धकंसम् । (३) अध्यर्धपूर्वाद्द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयस्य लुग्वा स्यात् । अध्यर्धकार्षापणम् । (४) द्वित्रिपूर्वान्निष्कशब्दादार्हीयस्य लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । (५) द्वित्रिबहुपूर्वाद्बिस्तादार्हीयस्य लुग्वा स्यात् । द्विबिस्तम् । द्विबैस्तिकम् । (६) अध्यर्धपूर्वात् द्विगोर्विंशतिकशब्दात्खः स्यात् । अध्यर्धविंशतिकीनम् । (७) अध्यर्धपूर्वात्खारीशब्दादीकन् स्यात् । अध्यर्धखारीकम् । (८) अध्यर्धपूर्वाद्द्विगोश्च पणपादमाषशतशब्दान्तादार्हीयष्वर्थेषु यत्स्यात् । अध्यर्धपण्यम् । (९) शाणशब्दाद्यद्वा स्यात्पक्षे ठञ् । तस्य लुक् । अध्यर्धशाण्यम् । अध्यर्धशाणम् । (१०) द्वित्रिपूर्वात् शाणशब्दादण् स्याच्चाद्यत् । त्रैरूप्यम् (११) तृतीयासमर्थात् क्रीतमित्यस्मिन्नर्थे यथाविहितं प्रत्ययाः स्युः । गौपुच्छिकम् । (१२) गोण्या

३९ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ।
४० पुत्राच्छ च ॥ २ ॥
४१ सर्वभूमिपृथिवीभ्यामणञौ ।
४२ तस्येश्वरः ।
४३ तत्र विदित इति च ।
४४ लोकसर्वलोकाट्ठञ् ।
४५ तस्य वापः ।
४६ पात्रात् ष्ठन् ।
४७ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ।
४८ पूरणार्धाट्ठन् ।
४९ भागाद्यच्च ।
५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।

इत्यस्यात्तद्धितलुकि सति । लुकोऽपवादः । पञ्चगोणिः । (१) गोशब्दाद्द्व्यचश्च प्रातिपदिकात्सङ्ख्यापरिमाणान्तादिवर्जिताद्यत्स्यात्, तस्य निमित्तं संयोगोत्पाताविल्यस्मिन्नर्थे । गव्यः ।(२) पुत्रशब्दाच्छः स्यात् चाद्यत् । पुत्रीयः । (३) आभ्यामणञौ स्तः । सार्वभौमः । (४) 'तस्ये'ति षष्ठसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यामणञौ स्तः । ईश्वर इत्यस्मिन्नर्थे । (५) सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यमणञौ स्तो विदितेऽर्थे । (६) तत्र विदित इत्यस्मिन्नर्थे आभ्यां ठञ् स्यात् । लौकिकः । (७) तस्येति षष्ठीसमर्थाद्वाप इत्यर्थे यथाविहितं प्रत्ययः स्यात् । प्रास्थिकम् । (८) पात्रशब्दान् ष्ठन् स्यात् प्राग्वत् । पात्रिकम् । (९) तदिति प्रथमासमर्थात्सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात्, यत्तत्प्रथमासमर्थं वृद्ध्यादि चेद्दीयते । पञ्चकः । (१०) पूरणार्थवाचिनोऽर्धशब्दाच्च वुन् स्यात् पूर्वोक्तेऽर्थे । द्वितीयकः । (११) भागशब्दाद्यत् स्याच्चाद्वुन् । भाग्यं, भागिकं वा । (१२) वंशादिभ्यः परो यो भारशब्दस्तदन्तं

५१ वंस्नद्रव्याभ्यां ठन्कनौ ।
५२ संम्भवत्यवहरति पचति ।
५३ आढकाचितपात्रात् खो-ऽन्यतरस्याम् ।
५४ द्विगोः ष्ठंश्च ।
५५ कुलिजाल्लुक्खौ च ।
५६ सोऽस्यांशवस्नभृतयः ।
५७ तदस्य परिमाणम् ।
५८ संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ।
५९ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।
६० पञ्चद्दशतौ वर्गे वा ॥ ३ ॥

यत्प्रातिपदिकं तत्प्रकृतिकाद्द्वितीयान्ताद्यथाविहितं प्रत्ययः स्याद्धरत्यादिष्वर्थेषु । वांशभारिकः । (१) द्वितीयान्ताभ्यां वस्नद्रव्याभ्यां यथासङ्ख्यं ठन्कनौ स्तो हरत्यादिष्वर्थेषु । वस्निकः । (२) द्वितीयासमर्थात्सम्भवादिष्वर्थेषु यथाविहितं ठञादिप्रत्ययः स्यात् । प्रास्थिकः । (३) द्वितीयान्तेभ्य आढकादिभ्यः सम्भवादिष्वर्थेषु खो वा स्यात् । पक्षे ठञ् । आढकीना । (४) आढकाद्यन्ताद्द्विगोः सम्भवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः । पक्षे ठञ् । द्व्याढकिकी । (५) कुलिजान्ताद्द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः । चात् ष्ठन् । द्विकुलिजी । (६) प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्, यत्प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति । पञ्चकः । (७) प्रथमान्तात्षष्ठ्यर्थे यथाविहितं प्रत्ययः स्याद्यत्प्रथमासमर्थं परिमाणञ्चेत्तद्भवति । प्रास्थिको राशिः । (८) सङ्ख्यात्मकपरिमाणवाचिनः प्रातिपदिकात्प्रथमासमर्थात्षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्, सञ्ज्ञासङ्घसूत्राध्ययनेषु प्रत्ययार्थेषु । पञ्चकाः । (९) एते रूढिशब्दा निपात्यन्ते पङ्क्तिः । (१०) इमौ डत्यन्तत्वेन वा निपात्येते

६१ सप्तनोऽञ्छन्दसि ।
६२ त्रिंशच्चत्वारिंशतो-
ब्राह्मणे संज्ञायां डण् ।
६३ तदर्हति ।
६४ छेदादिभ्यो नित्यम् ।
६५ शीर्षच्छेदाद्यच्च ।
६६ दण्डादिभ्यो यः ।
६७ छन्दसि च ।
६८ पात्राद्घंश्च ।
६९ कडङ्करदक्षिणाच्छ च ।
७० स्थालीबिलात् ।
७१ यज्ञर्त्विग्भ्यां घखञौ ।
७२ पारायणतुरायणचान्द्रा-
यणं वर्तयति ।
७३ संशयमापन्नः ।
७४ योजनं गच्छति ।

वर्गेऽभिधेये । (१) सप्तन्छब्दादन्स्याच्छन्दसि । साप्तानि । (२) आभ्यां डण् स्याद्ब्राह्मणस्य चेत्सञ्ज्ञा गम्यते । त्रैंशानि ब्राह्मणानि । (३) लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठक्ठञा-दयः स्युः । श्वेतच्छत्रिकः । (४) द्वितीयान्तेभ्यश्छेदादिभ्यो नित्यमर्हती-त्यर्थे ठञादयः स्युः । छैदिको वेतसः । (५) अस्माद्द्वितीयासमर्थान्नित्यमर्हतीत्यर्थे यत्स्याच्चाट्ठक् । शीर्षच्छेद्यः । (६) एभ्यो यत्स्यात् । दण्ड्यः । (७) प्रातिपदिकमात्रात्तदर्हतीत्यर्थे यत् । सादन्यं विदथ्यम् । (८) पात्रा-द्घन्स्याच्चाद्यत्तदर्हतीत्यर्थे । पात्रियः । (९) आभ्यां छः । कडङ्करीयो गौः । (१०) अस्माच्छः स्याद्यच्च । स्थालीबिलीयास्तण्डुलाः । (११) यज्ञ-र्त्विग्भ्यां यथासङ्ख्यं घखञौ स्तः । यज्ञियः । (१२) पारायणादिभ्यो वर्तयतीत्यर्थे ठञ् स्यात् । पारायणिकश्छात्रः । (१३) द्वितीयान्तात् संशय-शब्दापन्न इत्यर्थे ठञ् । सांशयिकः । (१४) द्वितीयान्ताद्योजनशब्दाद्गच्छतीत्यर्थे ठञ् । यौजनिकः ।

७५ पथः ष्कन्[1] ।
७६ पन्थो ण नित्यम्[2] ।
७७ उत्तरपथेनाहृतं च[3] ।
७८ कालात्[4] ।
७९ तेन निर्वृत्तम्[5] ।
८० तमधीष्टो भृतो भूतो भावी[6] ॥ ४ ॥
८१ मासाद्वयसि यत्खञौ[7] ।
८२ द्विगोर्यप्[8] ।
८३ षण्मासाण्ण्यच्च[9] ।
८४ अवयसि ठंश्च[10] ।
८५ समायाः खः[11] ।
८६ द्विगोर्वा[12] ।
८७ रात्र्यहःसंवत्सराच्च[13] ।
८८ वर्षाल्लुक् च[14] ।

(१) पथः ष्कन् स्याद्गच्छतीत्यर्थे । पथिकः । (२) पथः पन्थादेशो णश्च प्रत्ययः स्यात् नित्यं गच्छतीत्यर्थे । पान्थः । (३) अस्मादाहृतमित्यर्थे ठञ् स्यात् । औत्तरपथिकः । (४) 'व्युष्टादिभ्योऽ'णित्यतः प्रागधिकारोऽयम् । (५) कालवाचितस्तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ्। आह्निकम् । (६) द्वितीयान्तात्कालवाचिनष्ठञ् स्यादधीष्टादिष्वर्थेषु । मासिकः । (७) मासाद्वयसि अभिधेये यत्खञौ स्तो भूतेऽर्थे । मास्यः । (८) मासान्ताद्विगोर्वयसि अभिधेये यप् स्याद्भूते । द्विमास्यः ।

(९) षण्मासाद्वयस्यभिधेये ण्यत्स्याद्यप् च । चाट्ठञ् । षण्मास्यः । (१०) षण्मासशब्दादवयसि अभिधेये ठन्, चाण्ण्यत् । षण्मासिको व्याधिः । (११) समाशब्दाद्द्वितीयान्तादधीष्टादिष्वर्थेषु खः स्यात् । समीनः । (१२) समाशब्दान्ताद्विगोर्निर्वृत्तादिषु पञ्चस्वर्थेषु वा खः । पक्षे ठञ् । द्विसमीनः । (१३) रात्र्याद्यन्ताद्विगोर्निर्वृत्तादिष्वर्थेषु वा खः । पक्षे ठञ् । द्विरात्रीणः । (१४) वर्षशब्दान्ताद्विगोर्वा खः । पक्षे ठञ् वा च लुक् ।

८९ चित्तवति नित्यम् ।
९० षष्टिकाः षष्टिरात्रेण पच्यन्ते ।
९१ वत्सरान्ताच्छश्छन्दसि ।
९२ संपरिपूर्वात् ख च ।
९३ तेन परिजय्यलभ्यकार्यसुकरम् ।
९४ तदस्य ब्रह्मचर्यम् ।
९५ तस्य दक्षिणा यज्ञाख्येभ्यः ।
९६ तत्र च दीयते कार्यं भववत् ।
९७ व्युष्टादिभ्योऽण् ।
९८ तेन यथाकथाचहस्ताभ्यां णयतौ ।

द्विवर्षीणो व्याधिः । (१) वर्षशब्दान्ताद्द्विगोः प्रत्ययस्य नित्यं लुक् स्याच्चेतने प्रत्ययार्थे । द्विवर्षो दारकः । तृतीयान्तात्षष्टिरात्रशब्दात्कन् रात्रशब्दलोपश्च निपात्यते । षष्टिकः । (२) वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषुच्छन्दसि छप्रत्ययः स्यात् । इद्वत्सरीयः । (३) सम्परिपूर्वाद्वत्सरान्ताच्छन्दसि खः स्याच्चाच्छः, निर्वृत्तादिष्वर्थेषु । संवत्सरीणः । (४) तृतीयान्तात्कालवाचिनः परिजय्यादिष्वर्थेषु ठञ् । मासिको व्याधिः । (५) द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । मासिको ब्रह्मचारी । यद्वा—प्रथमान्तादस्येति षष्ठ्यर्थे प्रत्ययः । मासिकं ब्रह्मचर्यम् । (६) षष्ठ्यर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यर्थे ठञ् । द्वादशाहिकी । (७) सप्तम्यन्तात्कालवाचिनः प्रातिपदिकात् 'दीयते' 'कार्य'मित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् । प्रावृषेण्यम् । (८) सप्तम्यन्तेभ्यो व्युष्टादिभ्योऽण् स्याद्दीयते कार्यमित्येतयोरर्थयोः । वैयुष्टम् । (९) यथाकथाचेत्यव्ययसङ्घात्तृतीयान्ताद्धस्तशब्दाच्च यथासङ्ख्यं णयतौ स्तः । याथाकथाचम् ।

९९ संपादिनि ।

१०० कर्मवेषाद्यत् ॥५॥

१०१ तस्मै प्रभवति सन्तापादिभ्यः ।

१०२ योगाद्यच्च ।

१०३ कर्मण उकञ् ।

१०४ समयस्तदस्य प्राप्तम् ।

१०५ ऋतोरण् ।

१०६ छन्दसि घस् ।

१०७ कालाद्यत् ।

१०८ प्रकृष्टे ठञ् ।

१०९ प्रयोजनम् ।

११० विशाखाषाढादण्मन्थदण्डयोः ।

१११ अनुप्रवचनादिभ्यश्छः ।

(१) तृतीयान्तात्सम्पादिन्यभिधेये ठञ् स्यात् । कार्णवेष्टकिकं मुखम् । (२) तृतीयान्ताभ्यां कर्मवेषाभ्यां यत्स्यात्सम्पादिन्यभिधेये । कर्मण्यं शौर्यम् । (३) चतुर्थ्यन्तेभ्यः सन्तापादिभ्यः प्रभवतीत्यर्थे ठञ् । सान्तापिकः ।(४) चतुर्थ्यन्ताद्योगशब्दात्प्रभवतीत्यर्थे यत्, चाट्ठञ् । योग्यः। ( ५ ) चतुर्थ्यन्तात्कर्मण उकञ् प्रभवतीत्यर्थे । कार्मुकम् । ( ६ ) प्रथमान्तात्समयशब्दात्षष्ठ्यर्थे ठञ्, यत्प्रथमान्तं प्राप्तं चेत्तद्भवति । सामयिकम् । ( ७ ) प्रथमान्तादृतोरण्स्यादुक्तेऽर्थे । आर्तवम् । ( ८ ) ऋतोश्छन्दसि घस् स्यात्तदस्य प्राप्तमित्यर्थे । ऋत्वियः । (९)कालाद्यत्स्यादुक्तेऽर्थे । काल्यं शीतम् । (१०)प्रकर्षे विद्यमानात्कालात्षष्ठ्यर्थे ठञ् । कालिकं वैरम् । (११) प्रथमान्तात्षष्ठ्यर्थे ठञ् स्याद्यत्प्रथमासमर्थं प्रयोजनं चेत्तद्भवति । ऐन्द्रमहिकम् । (१२) आभ्यामण् स्यात्प्रयोजनमित्यर्थे, क्रमान्मन्थदण्डयोरर्थयोः । वैशाखो मन्थः । (१३) प्रथमान्तेभ्योऽनुप्रवचनादिभ्यश्छः । अनुप्रवचनीयम् ।

११२ समापनात् सपूर्वपदात् ।
११३ ऐकागारिकट् चौरे ।
११४ आकालिकडाद्यन्तवचने ।
११५ तेन तुल्यं क्रिया-चेद्वतिः ।
११६ तत्र तस्येव ।
११७ तदर्हम् ।
११८ उपसर्गाच्छन्दसि धात्वर्थे ।

(१) समापनाद्विद्यमानपूर्वाच्छः स्यादुक्तेर्थे । व्याकरणसमापनीयम् । (२) 'ऐकागारिक'डिति निपात्यते चौरेऽभिधेये । ऐकागारिकश्चौरः । (३) अयं निपात्यते आद्यन्तवचने । आकालिकः । (४) तृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात्, यत्तुल्यं क्रिया चेत्सा भवति । ब्राह्मणवदधीते । (५) सप्तम्यन्तात्षष्ठ्यन्ताच्च इवार्थे वतिप्रत्ययः स्यात् । मथुरावत्स्रुघ्ने प्राकारः । (६) द्वितीयान्तादर्हतीत्यर्थे वतिः । विधिवत्पूज्यते । (७) वेदे धात्वर्थविशिष्टे साधने वर्त्तमानात्स्वार्थे वतिः स्यात् । यदुद्वतः ।

११९ तस्य भावस्त्वतलौ ।
१२० आ च त्वात् ॥६॥
१२१ न नञ्पूर्वात्तत्पुरुषाद-चतुरसङ्गतलवणवट-युधकतरसलसेभ्यः ।
१२२ पृथ्वादिभ्य इमनिज्वा ।
१२३ वर्णदृढादिभ्यः ष्यञ् च ।
१२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च ।

(८) षष्ठ्यन्ताद्भावेऽर्थे त्वतलौ स्तः । गोत्वम् । (९) 'ब्रह्मणस्त्व'इत्यतः प्राक् त्वतलावधिक्रियेते । (१०) इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्नस्युश्चतुरादीन् वर्जयित्वा । अपतित्वम् । (११) पृथ्वादिभ्यो भावे इमनिज्वा स्यात् पक्षेऽण् । प्रथिमा । (१२) एभ्यो भावे ष्यञ्स्याच्चादिमनिच् । शौक्ल्यम् । (१३) एभ्यो भावे कर्मणि च ष्यञ् स्यात् । जाड्यम् ।

१२५ स्तेनाद्यन्नलोपश्च ।
१२६ सख्युर्यः ।
१२७ कपिज्ञात्योर्ढक् ।
१२८ पत्यन्तपुरोहितादिभ्यो यक् ।
१२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।
१३० हायनान्तयुवादिभ्योऽण् ।
१३१ इगन्ताच्च लघुपूर्वात् ।
१३२ योर्पधाद्गुरूपोत्तमाद्वुञ् ।
१३३ द्वन्द्वमनोज्ञादिभ्यश्च ।
१३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।
१३५ होत्राभ्यश्छः ।
१३६ ब्रह्मणस्त्वः ।

[ 'प्राक्क्रीताच्छताच्च सवभूमिसप्तनोऽमासाात्तस्मै प्रभवाति न नञ्पूर्वात् षोडश' ॥ ]

(१) स्तेनाद्भावे कर्मणि च यत्स्यान्नकारलोपश्च । स्तेयम् । (२) सख्युर्यः स्याद्भावकर्मणोः । सख्यम् । (३) आभ्यां ढक् स्याद्भावकर्मणोः । कापेयम् । (४) एभ्यो यक् स्याद्भावकर्मणोः । सैनापत्यम् । (५) एभ्योऽञ्स्याद्भावकर्मणोः । आश्वम् । (६) एभ्योऽण् स्याद्भावकर्मणोः । द्वैहायनम् । (७) इगन्ताल्लघुपूर्वादण् स्याद्भावकर्मणोः । शौचम् । (८) असाद्वुञ् । रामणीयकम् । (९) द्वन्द्वान्मनोज्ञादिभ्यश्च वुञ् । शैष्योपाध्यायिका । (१०) गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ्स्याद्भावकर्मणोः। गार्गिकया श्लाघते । (११) ऋत्विग्विशेषवाचिनश्छः स्याद्भावकर्मणोः । अच्छावाकीयम् । (१२) होत्रावाचिनो ब्रह्मन्शब्दात्त्वः स्यात् । ब्रह्मत्वम्।

*इतिपञ्चमाध्यायस्य प्रथमः पादः*

## अथ द्वितीयः पादः ।

१ धान्यानां भवने क्षेत्रे खञ् ।
२ व्रीहिशाल्योर्ढक् ।
३ यवयवकषष्टिकाद्यत् ।
४ विभाषा तिलमाषोमाभङ्गाऽणुभ्यः ।
५ सर्वचर्मणः कृतः खखञौ ।
६ यथामुखसंमुखस्य दर्शनः खः
७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।
९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।
१० परोवरपरम्परपुत्रपौत्रमनुभवाति ।
११ अवारपारात्यन्तानुकामं गामी ।
१२ समांसमां विजायते ।
१३ अद्यश्वीनाऽवष्टब्धे ।

(१) षष्ठ्यन्तेभ्यो धान्यवाचिभ्यो भवने क्षेत्रे खञ् स्यात् । मौद्गीनम् । (२) व्रीहिशाल्योर्ढक् स्यादुक्तविषये व्रैहेयम् । (३) यवादिभ्यो यत्स्याद्भवने क्षेत्रे । यव्यम् । (४) तिलादिभ्यो यद्वा स्यात्पक्षे खञ् । तिल्यम् । (५) तृतीयान्तात्सर्वचर्मणः कृत इत्यर्थे खखञौ स्तः । सर्वचर्मीणः । (६) षष्ठ्यन्ताभ्यामाभ्यां दर्शन इत्यर्थे खः । यथामुखीनः । (७) सर्वादेः पथ्याद्यन्ताद्द्वितीयान्तात्खः स्याद्व्याप्नोतीत्यर्थे । सर्वपथीनः । (८) अस्मात्प्राप्नोतीत्यर्थे खः स्यात् । आप्रपदीनः । (९) द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासङ्ख्यं बद्धादिष्वर्थेषु खः स्यात् । अनुपदीना । (१०) एभ्योऽनुभवतीत्यर्थे खः । परोवरीणः । (११) एभ्यो गामीत्यर्थे खः । अवारपारीणः । (१२) समांसमामित्यस्माद्विजायते इत्यर्थे खः । समांसमीना । (१३) अयं निपा-

१४ आगवीनः ।
१५ अनुग्वलं गामी ।
१६ अध्वनो यत्खौ ।
१७ अभ्यमित्राच्छ च ।
१८ गोष्ठात् खञ् भूतपूर्वे ।
१९ अश्वस्यैकाहगमः ।
२० शालीनकौपीने अधृष्टाकार्ययोः ॥१॥

२१ व्रातेन जीवति ।
२२ साप्तपदीनं सख्यम् ।
२३ हैयङ्गवीनं संज्ञायाम् ।
२४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।
२५ पक्षात्तिः ।
२६ तेन वित्तश्चुञ्चुप्चणपौ ।
२७ विनञ्भ्यां नानाञौ न सह ।

त्यतेऽवष्टब्धे । अद्यश्वीना वडवा ।

(१) आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते । आगवीनः । (२) अनुगुशब्दादलङ्गामीत्यर्थे खः स्यात् । अनुगवीनः । (३) अध्वशब्दाद्यत्खौ स्तोऽलङ्गामीत्यर्थे । अध्वन्यः । (४) असाच्छः स्याच्चायत्खौ । अभ्यमित्रीयः । (५) गोष्ठात्खञ् स्याद्भूतपूर्वे । गौष्ठीनः । (६) अश्वशब्दादेकाहगम इत्यर्थे खञ् । आश्वीनोऽध्वा । (७) इमौ खञ्प्रत्ययान्तौ निपात्येते एतयोरर्थयोः । शालीनः । (८) तृतीयान्ताद्व्रातशब्दाज्जीवतीत्यर्थे खञ् । व्रातीनः । (९) 'साप्तपदीन'मिति खञन्तं निपात्यते सख्ये । साप्तपदीनम् । (१०) ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् च निपात्यते । हैयङ्गवीनम् । (११) षष्ठ्यन्तेभ्यः पील्वादिभ्यः कुणब्जाहचौ स्तः । पीलुकुणः । (१२) पक्षात्तिप्रत्ययः स्यान्मूले । पक्षतिः । (१३) तृतीयान्ताद्वित्तेऽर्थे चुञ्चुप्चणपौ स्तः । विद्याचुञ्चुः । (१४) असहार्थे पृथग्भावे वर्त्तमानाभ्यां

२८ वेः शालच्छङ्कटचौ ।
२९ सम्प्रोदश्च कटच् ।
३० अवात् कुटारच्च ।
३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।
३२ नेर्बिडज्बिरीसचौ ।
३३ इनच्पिटच्चिकचि च ।
३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः ।
३५ कर्मणि घटोऽठच् ।
३६ तदस्य सञ्जातं तारकादिभ्य इतच् ।
३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।
३८ पुरुषहस्तिभ्यामण् च ।
३९ यत्तदेतेभ्यः परिमाणे वतुप् ।

विनभ्यां नानाञौ स्तः स्वार्थे । विना । (१) विशब्दाच्छालच्शङ्कटचौ स्तः । विशालम् । (२) सम्प्रोभ्यः कटच्स्यात् । चाद्वेः । सङ्कटम् । (३) अवात्कुटारच्स्याच्चात्कटच् । अवकुटारः । (४) नासिकाया नतेऽभिधेयेऽवात् टीटजादयः स्युः संज्ञायाम् । अवटीटम् । (५) निशब्दान्नासिकाया नतेऽभिधेये बिडज्बिरीसचौ स्तः । निबिडम् । (६) नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिकचि—इत्यादेशौ च । चिकिनम् । (७) उपाधिभ्यां यथासंख्यमासन्नारूढयोरर्थयोर्वर्त्तमानाभ्यां त्यकन् संज्ञायाम् । उपत्यका । (८) सप्तम्यन्तात्कर्मशब्दाद्घट इत्यर्थेऽठच् स्यात् । कर्मठः । (९) प्रथमान्तेभ्यस्तारकादिभ्य इतच् । तारकितम् । (१०) प्रथमान्तादस्येत्यर्थे द्वयसजादयः स्युः यत्प्रथमान्तं प्रमाणञ्चेत्तद्भवति । ऊरुद्वयसम् । (११) प्रथमान्ताभ्यामाभ्याम्प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् स्यात् । पौरुषम् । (१२) यत्तदेतेभ्यः प्रथमान्तेभ्यः परिमाणोपाधिके-

४० किमिदंभ्यां वो घः ॥२॥
४१ किमः संख्यापरिमाणे डति च।
४२ संख्याया अवयवे तयप्।
४३ द्वित्रिभ्यां तयस्याऽयज्वा।
४४ उभादुदात्तो नित्यम्।
४५ तदस्मिन्नधिकामिति दशान्ताड्डः।
४६ शदन्तविंशतेश्च।
४७ संख्याया गुणस्य निमाने मयट्।
४८ तस्य पूरणे डट्।
४९ नान्तादसंख्यादेर्मट्।
५० थट् च छन्दसि।
५१ षट्कतिकतिपयचतुरां थुक्।
५२ बहुपूगगणसङ्घस्य तिथुक्।

भ्योऽस्येत्यर्थे वतुप्। यावान्। (१) आभ्यां वतुप्स्याद्वस्य च घः। कियान्। (२) किमो डतिः स्याच्चाद्वतुप् वस्य च घः संख्यापरिमाणे। कति। (३) अवयवे वर्तमानात्संख्या वाचकादस्येत्यर्थे तयप्। पञ्चतयम्। (४) द्वित्रिभ्याम्परस्य तयस्य अयजादेशो वा स्यात्। द्वयम्। (५) उभात्परस्य तयपो नित्यमयजादेशःस्यात्स चोदात्तः। उभयम्। (६) प्रथमान्तादस्मिन्निति सप्तम्यर्थे दशान्ताद् डः स्यात् यत्प्रथमान्तमधिकं चेत्तद्भवति। एकादशम्। (७) शदन्ताद्विंशतेश्च डः स्यादुक्तेऽर्थे। त्रिंशम्। (८) भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात्। द्विमयम्। (९) षष्ठ्यन्तात्सङ्ख्यावाचिनः पूरणेऽर्थे डट्। एकादशः। (१०) नान्तात्सङ्ख्यावाचिनः प्रातिपदिकादसङ्ख्यादेर्डटो मडागमः स्यात्। पञ्चमः। (११) नान्तादङ्ख्यादेर्डटस्थट् स्यान्मट् चच्छन्दसि। पञ्चथः। (१२) षडादेस्थुगागमः स्याड्डटि परतः। षष्ठः। (१३) बह्वादेस्तिथुक् स्यात् डटि परतः। बहुतिथः।

५३ वतोरिथुक् ।
५४ द्वेस्तीयः ।
५५ त्रेः संप्रसारणं च ।
५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् ।
५७ नित्यं शतादिमासार्धमाससंवत्सराच्च ।
५८ षष्ट्यादेश्चासंख्यादेः ।
५९ मतौ छः सूक्तसाम्नोः ।
६० अध्यायानुवाकयोर्लुक् ॥३॥
६१ विमुक्तादिभ्योऽण् ।
६२ गोषदादिभ्यो वुन् ।
६३ तत्र कुशलः पथः ।
६४ आकर्षादिभ्यः कन् ।
६५ धनहिरण्यात् कामे ।
६६ स्वाङ्गेभ्यः प्रसिते ।

(१) वतोर्डटि परत इथुगागमः स्यात्। यावतिथः । (२) द्विशब्दात्तीयः स्यात्तस्य पूरणे इत्यर्थे । द्वितीयम् । (३) त्रिशब्दात्तीयः प्रत्ययः स्यात्त्रेः सम्प्रसारणञ्च तस्य पूरणेऽर्थे । तृतीयः । (४) विंशत्यादिभ्यो डटस्तमडागमो वा स्यात् । विंशतितमः । (५) शतादिभ्यः परस्य डटो नित्यं तमडागमः स्यात् । शततमः । (६) असंख्यादेः षष्ट्यादेः परस्य डटो नित्यं तमडागमः स्यात् । षष्टितमः । (७) मत्वर्थे छः स्यात् सूक्तसाम्नोः । अच्छावाकीयम् ।

(८) मत्वर्थस्य छस्य लुक् स्यादध्यायानुवाकयोः । गर्दभाण्डः । (९) एभ्यो मत्वर्थे अण् स्यादध्यायानुवाकयोः । वैमुक्तः । (१०) गोषदादिभ्यो मत्वर्थे वुन् स्यादध्यायानुवाकयोः । गोषदकः । (११) सप्तम्यन्तात्पथिन्शब्दाद्वुन् कुशलेऽर्थे । पथकः । (१२) आकर्षादिभ्यः कन् स्यात् कुशलेऽर्थे । आकर्षकः । (१३) सप्तम्यन्ताभ्यामाभ्यां कन् स्यात् कामे । धनकः । (१४) स्वाङ्गवाचकेभ्यः सप्तम्यन्तेभ्यः कन् प्रसितेऽर्थे ।

६७ उदराट्ठगाद्यूने[1]।
६८ सस्येन परिजातः[2]।
६९ अंशं हारी[3]।
७० तन्त्रादचिरापहृते[4]।
७१ ब्राह्मणकोष्णिके संज्ञायाम्[5]।
७२ शीतोष्णाभ्यां कारिणि[6]।
७३ अधिकम्[7]।
७४ अनुकाभिकाभीकः कमिता[8]।
७५ पार्श्वेनान्विच्छति[9]।
७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ[10]।
७७ तावतिथं ग्रहणमिति लुग्वा[11]।
७८ स एषां ग्रामणीः[12]।
७९ शृङ्खलमस्य बन्धनं करभे[13]।

केशकः। (१) उदरादविजिगीषौ ठक् स्यात्। औदरिकः। (२) सस्यशब्दात्परिजात इत्यर्थे कन्। सस्यकः। (३) द्वितीयान्तादंशशब्दात्कन् स्याद्धारीत्यर्थे। अंशकोदायादः। (४) तन्त्रात्कन् स्यादचिरापहृतेऽर्थे। तन्त्रकः। (५) ब्राह्मणशब्दादायुधजीवित्वोपाधिकादन्नशब्दाच्चाल्पत्वोपाधिकात्प्रथमान्तात्कन् सञ्ज्ञायाम्। ब्राह्मणकः। (६) शीतोष्णाभ्यां कारिणि कन् स्यात्। शीतकः। (७) अध्यारूढशब्दात्कन् स्यादुत्तरपदलोपश्च। अधिकम्।

(८) क्रियाविशिष्टसाधनवाचिभ्यामन्वभिभ्यां कन् स्यात्स्वार्थे। अनुकः। (९) तृतीयान्तात्पार्श्वशब्दादन्विच्छतीत्यर्थे कन्। पार्श्वकः। (१०) आभ्यां ठक् ठञौ स्तोऽन्विच्छतीत्यर्थे। आयःशूलिकः। (११) पूरणप्रत्ययान्तात्तृतीयान्ताद्ग्रहणमित्यर्थे कन्स्यात्पूरणप्रत्ययस्य च लुग्वा। द्वितीयकम्। (१२) ग्रामणीविशेषवाचकात्प्रथमान्तादस्येत्यर्थे कन्। देवदत्तकः। (१३ बन्धनविशेषाच्छृङ्खलशब्दात्प्रथमान्तादस्य करभस्येत्यर्थे कन् स्यात्। शृङ्खलकः।

८० उत्क[1] उन्मनाः ॥ ४ ॥
८१ कालप्रयोजनाद्रोगे[2] ।
८२ तदस्मिन्नन्नं[3] प्रायेण संज्ञायाम् ।
८३ कुल्माषादञ्[4] ।
८४ श्रोत्रियंश्छन्दोऽधीते[5] ।
८५ श्राद्धमनेन[6] भुक्तमिनिठनौ ।
८६ पूर्वादिनिः[7] ।
८७ सपूर्वाच्च[8] ।
८८ इष्टादिभ्यश्च[9] ।
८९ छन्दसि[10] परिपन्थिपरिपरिणौ पर्यवस्थातरि ।
९० अनुपद्यन्वेष्टा[11] ।
९१ साक्षाद्द्रष्टरि[12] संज्ञायाम् ।
९२ क्षेत्रियच्परक्षेत्रे[13] चिकित्स्यः ।
९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्र-[14]

(१) उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् । उत्कः । (२) कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे । द्वितीयकः । (३) प्रथमान्तात्सप्तम्यर्थे कन् स्याद्यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् । गुडापूपिका । (४) कुल्माषादञ्स्यादुक्तेऽर्थे । कौल्माषी । (५) 'श्रोत्रिय'न्निति निपात्यते छन्दोऽधीते-इत्यर्थे । श्रोत्रियः । (६) भुक्तोपाधिकाच्छ्राद्धशब्दादनेनेत्यर्थे इनिठनौ स्तः । श्राद्धी । (७) पूर्वादनेनेत्यर्थे इनिः स्यात् । पूर्वी । (८) सपूर्वात्पूर्वान्तात्प्रातिपदिकादनेनेत्यर्थे इनिः । कृतपूर्वी । (९) इष्टादिभ्य इनिः स्यात् पूर्वविषये । इष्टी । (१०) एतौ छन्दसि निपात्येते पर्यवस्थातरि । (११) अनुपदीति निपात्यतेऽन्वेष्टरि । अनुपदी । (१२) साक्षाच्छब्दादन्ययादिनिःस्याद्द्रष्टरि सञ्ज्ञायाम् । साक्षी । (१३) क्षेत्रियजिति निपात्यते परक्षेत्रे चिकित्स्ये । क्षेत्रियः । (१४) इन्द्रियमिति निपात्यते इन्द्रलिङ्गमित्याद्यर्थेषु । इन्द्रियम् ।

दत्तमिति वा।

९४ तदस्यास्त्यस्मिन्निति मतुप्।

९५ रसादिभ्यश्च।

९६ प्राणिस्थादातो लजन्यतरस्याम्।

९७ सिध्मादिभ्यश्च।

९८ वत्सांसाभ्यां कामबले।

९९ फेनादिलच्च।

१०० लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥५॥

१०१ प्रज्ञाश्रद्धार्चाभ्यो णः।

१०२ तपःसहस्राभ्यां विनीनी।

१०३ अण् च।

१०४ सिकताशर्कराभ्यां च।

१०५ देशे लुबिलचौ च।

१०६ दन्त उन्नत उरच्।

१०७ ऊषसुषिमुष्कमधो रः।

(१) अस्तिसमानाधिकरणात् प्रथमान्तादस्येति अस्मिन्निति चार्थे मतुप्स्यात्। गोमान्। (२) रसादिभ्यो मतुप्स्यात्तदस्यास्त्यस्मिन्निति विषये। रसवान्। (३) प्राणिस्थादाकारान्ताल्लज् वा स्यात् मत्वर्थे। चूडालः। (४) सिध्मादिभ्यो लज्वास्यात्। सिध्मलः। (५) आभ्यां यथासंख्यं कामवति बलवति चार्थे लज्वा। वत्सलः (६) फेनादिलच् स्यान्मत्वर्थे। फेनिलः। (७) लोमादिभ्यः शः, पामादिभ्यो नः, पिच्छाभ्यो लच्स्यात्। लोमशः। (८) एभ्योः णः स्यान्मत्वर्थे। प्राज्ञः। (९) तपःसहस्राभ्यां 'विनि' 'इनि' इत्येतौ स्तो मत्वर्थे। तपस्वी। (१०) आभ्यामण् च स्यान्मत्वर्थे। तापसः। (११) आभ्यामण् स्यान्मत्वर्थे। सैकतः। (१२) सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ स्तः, चादण्। सिकता। (१३) दन्तशब्दादुन्नतोपाधिकादुरच्स्यान्मत्वर्थे। दन्तुरः। (१४) ऊषादिभ्यो रः स्यान्मत्वर्थे। ऊषरम्।

१०८ द्युद्रुभ्यां मः।
१०९ केशाद्वोऽन्यतरस्याम्।
११० गाण्ड्यजगात् संज्ञायाम्।
१११ काण्डाण्डादीरन्नीरचौ।
११२ रजःकृष्यासुतिपरिषदो वलच्।
११३ दन्तशिखात् संज्ञायाम्।
११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः।
११५ अत इनिठनौ।
११६ व्रीह्यादिभ्यश्च।
११७ तुन्दादिभ्य इलच्च।
११८ एकगोपूर्वाट्ठञ् नित्यम्।
११९ शतसहस्रान्ताच्च निष्कात्।
१२० रूपादाहतप्रशंसयोर्यप्॥८॥
१२१ अस्मायामेधास्रजो विनिः।
१२२ बहुलं छन्दसि।

(१) आभ्यां मः स्यान्मत्वर्थे। द्युमः। (२) केशाद्वो वा स्यादुक्तेऽर्थे। केशवः। (३) 'गाण्डी' 'अजग'- इत्येताभ्यां वः स्यात्सञ्ज्ञायां मत्वर्थे। गाण्डीवम्। (४) आभ्यां यथा सङ्ख्यमेतौ स्तो मत्वर्थे। काण्डीरः। (५) एभ्यो वलच् मत्वर्थे। रजस्वला। (६) आभ्यां वलच्सञ्ज्ञायां मत्वर्थे। दन्तावलः। (७) एते मत्वर्थे निपात्यन्ते सञ्ज्ञायाम्। ज्योत्स्ना। (८) अदन्तादिनिठनौ स्तो मत्वर्थे। दण्डी। (९) व्रीह्यादिभ्य इनिठनौ स्तः। व्रीही। (१०) एभ्य इलच्स्यात्। तुन्दिलः। (११) एकगोपूर्वान्नित्यं ठञ् स्यान्मत्वर्थे। ऐकशतिकः। (१२) निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रतिपदिकाट्ठञ् स्यान्मत्वर्थे। गौशतिकः। (१३) आहतप्रशंसाऽर्थे वर्त्तमानाद्रूपशब्दाद्यप्। रूप्यम्। (१४) एभ्यो विनिः स्यान्मत्वर्थे। पयस्वी। (१५) छन्दसि बहुलं विनिः।

१२३ ऊर्णाया युस् ।

१२४ वाचो ग्मिनिः ।

१२५ आलजाटचौ बहुभाषिणि ।

१२६ स्वामिन्नैश्वर्ये ।

१२७ अर्शआदिभ्योऽच् ।

१२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।

१२९ वातातीसाराभ्यां कुक् च ।

१३० वयसि पूरणात् ।

१३१ सुखादिभ्यश्च ।

१३२ धर्मशीलवर्णान्ताच्च ।

१३३ हस्ताज्जातौ ।

१३४ वर्णाद्ब्रह्मचारिणि ।

१३५ पुष्करादिभ्यो देशे ।

१३६ बलादिभ्यो मतुबन्यतरस्याम् ।

तेजस्विन् । (१) ऊर्णाया युस् स्यान्मत्वर्थे । ऊर्णायुः (२) वाक्शब्दात् ग्मिनिः स्यात् । वाग्मी । (३) वाक्शब्दादेतौ स्तो मत्वर्थे, बहुभाषिण्यभिधेये । वाचालः । (४) ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् । स्वामी । (५) 'अर्शस्' इत्येवमादिभ्योऽच्स्यात् मत्वर्थे । अर्शसः । (६) द्वन्द्वादिविषयेभ्यः प्राणिस्थार्थवाचिभ्य इनिः स्यात् । कटकवलयिनी ।

(७) आभ्यामिनिः, तत्सन्नियोगेन तयोः कुक् च । वातकी । (८) पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये । पञ्चमी । (९) सुखादिभ्य इनिः स्यान्मत्वर्थे । सुखी । (१०) धर्माद्यन्तादिनिः । ब्राह्मणधर्मी । (११) हस्तादिनिः स्यान्मत्वर्थे, जातौ । हस्ती । (१२) वर्णादिनिः स्यान्मत्वर्थे ब्रह्मचारिणि । वर्णी । (१३) पुष्करादिभ्य इनिः स्याद्देशे । पुष्करिणी । (१४) बलादिभ्यो मतुप्स्याद्वा । बलवान् ।

१३७ संज्ञायां[1] मन्माभ्याम् ।
१३८ कंशंभ्यां[2] बभयुस्तितुतयसः ।
१३९ तुन्दिवलिवटेर्भः[3] ।
१४० अहंशुभमोर्युस्[4] ।
[ 'धान्यानां व्रातेन किमो विमुक्तादिभ्यः कालप्रयोजनात्प्रज्ञाश्रद्धास्मायामेधाविंशातिः' ॥

## तृतीयः पादः ।

१ प्राग्दिशो[5] विभक्तिः ।
२ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः[6]
३ इदम[7] इश् ।
४ एतेतौ[8] रथोः ।
५ एतदोऽन्[9] ।
६ सर्वस्य[10] सोऽन्यतरस्यां दि ।
७ पञ्चम्यास्तसिल्[11] ।
८ तसेश्च[12] ।

---

(१) मन्नन्तान्मान्ताच्च इनिः स्यान्मत्वर्थे । प्रथिमिनी । (२) कं शंभ्यां बभादयः सप्त प्रत्ययाः स्युर्मत्वर्थे । कम्बः । (३) तुन्दादिभ्यो भः स्यान्मत्वर्थे । तुन्दिभः । (४) अहं–शुभमोर्युस् स्यान्मत्वर्थे । अहंयुः। इति पञ्चमाध्यायस्य द्वितीयः पादः।

(५) 'दिक्छब्देभ्य'इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसञ्ज्ञाः स्युः । (६) 'किमः सर्वनाम्नो बहुशब्दाच्चेति' प्राग्दिशोऽधिक्रियते । (७) इदम इशादेशः प्राग्दिशीये परे । इह । (८) इदंशब्दस्य 'एत''इत्' इत्यादेशौ स्तोरेफादौ थकारादौ च प्राग्दिशीये परे। एतर्हि । (९) योगविभागः कर्त्तव्यः । एतदः । एतद एतेतौ स्तो रथोः । अन् । एतदोऽनादेशः स्यात् । (१०) प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् ।सदा। (११)पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्। कुतः । (१२) किंसर्वनामबहुभ्यः परस्य तसस्तसिलादेशः स्यात् ।

९ पर्य्यभिभ्यां च ।
१० सप्तम्यास्त्रल् ।
११ इदमो हः ।
१२ किमोऽत् ।
१३ वा ह च च्छन्दसि ।
१४ इतराभ्योऽपि दृश्यन्ते ।
१५ सर्वैकान्यकिंयत्तदः काले दा ।
१६ इदमो हिंल् ।
१७ अधुना ।
१८ दानीञ्च ।
१९ तदो दा च ।
२० तयोर्दाहिंलौ च छन्दसि ॥ १ ॥
२१ अनद्यतने हिंलन्यतरस्याम् ।
२२ सद्यःपरुत्परार्य्यैषमःपरेद्य-व्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्यु-रितरेद्युरपरेद्युरधरेद्युरुभयेद्यु

(१) पर्य्यभिभ्यां तसिल्स्यात् । परितः । (२) किमादिभ्यः सप्तम्यन्तेभ्योऽह्यादिभ्यस्त्रल् स्यात् । कुत्र । (३) इदमः सप्तम्यन्तात् हः प्रत्ययः स्यात् । इह । (४) सप्तमा-न्तात्किमोऽद्वा स्यात् । पक्षे त्रल् । क्व । (५) किमः सप्तम्यन्ताद्धःप्रत्ययो वा स्याच्छन्दसि । कुह स्थः ।

(६) पञ्चमीसप्तमीतरविभक्त्यान्तादपि तसिलादयो दृश्यन्ते । ततो भवान् । (७) सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सदा । (८) सप्तम्यन्ता दिदमः काले हिंल् स्यात् । एतर्हि । (९) इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे अधुना प्रत्ययः स्यात् । अधुना । (१०) इदमो दानीञ्च स्यात् । इदानीम् । (११) सप्तम्यन्तात्काल-वृत्तेस्तच्छब्दाद्दाप्रत्ययः स्याद्दानीञ्च । तदा । (१२) इदमस्तदश्च यथासङ्ख्यं दाहिंलौ स्तश्छन्दसि । (१३) अनद्यतन-कालवृत्तिभ्यः किमादिभ्यः सप्तम्यन्त-भ्यो हिंल्वा स्यात् । पक्षे दा । कर्हि । (१४) एते निपात्यन्ते । सद्यः ।

रुत्तरेद्युः।

२३ प्रकारवचने थाल्। [1]

२४ इदमस्थमुः। [2]

२५ किमश्च। [3]

२६ था हेतौ च च्छन्दसि। [4]

२७ दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। [5]

२८ दक्षिणोत्तराभ्यामतसुच्। [6]

२९ विभाषा परावराभ्याम्। [7]

३० अञ्चेर्लुक्। [8]

३१ उपर्युपरिष्टात्। [9]

३२ पश्चात्। [10]

३३ पश्च पश्चा च च्छन्दसि। [11]

३४ उत्तराधरदक्षिणादातिः। [12]

३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः। [13]

(१) प्रकारवृत्तिभ्यः किमादिभ्यस्थाल्स्यात्स्वार्थे। तथा। (२) इदंशब्दात्प्रकारवृत्तेस्थमुः स्यात्। इत्थम्। (३) किमः प्रकारवृत्तेस्थमुः स्यात्। कथम्। (४) किमो हेतौ वर्त्तमानात्थाप्रत्ययः, चात्प्रकारवचने। कथा। (५) सप्तम्याद्यन्तेभ्यो दिशिरूढभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययः स्यात्। पुरस्तात्। (६) दिग्देशकालवृत्तिभ्यां दक्षिणोत्तराभ्यामतसुच् स्यात्। दक्षिणतः। (७) परावराभ्यामतसुज्वा स्यात्। परतः। (८) अञ्चत्यन्ताद्दिक्छब्दादस्तातेर्लुक् स्यात्। प्राक्। (९) अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशो रिल् रिष्टातिलौ च प्रत्ययौ। उपरि। (१०) अपरस्य पश्चादेश आतिश्च प्रत्ययोऽस्तातेर्विषये। (११) पश्च छन्दसि निपात्येते। पश्च हि सः। (१२) एभ्यः आतिः स्यात्। उत्तरात्। (१३) उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये, पञ्चमीं विना।

३६ दक्षिणादाच्[1] ।
३७ आहि च दूरे[2] ।
३८ उत्तराच्च[3] ।
३९ पूर्वाधरावराणामसि पुरध वश्चैषाम्[4] ।
४० अस्ताति च[5] ।
४१ विभाषाऽवरस्य[6] ।
४२ संख्याया विधार्थे धा[7] ।
४३ अधिकरणविचाले च[8] ।
४४ एकाद्धो ध्यमुञन्यतरस्याम्[9] ।
४५ द्वित्र्योश्च धमुञ्[10] ।
४६ एधाच्च[11] ।
४७ याप्ये पाशप्[12] ।
४८ पूरणाद्भागे तीयादन्[13] ।

उत्तरेण । (१) अस्तातेर्विषये दक्षिणादाच् स्यात् । दक्षिणा । (२) दक्षिणाद्दूरे आहिः स्याचादाच् । दक्षिणाहि । (३) उत्तराद्दूरे आहिः स्यात्, चादाच् । उत्तराहि । (४) पूर्वादिभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात् । तद्योगे चर्पा क्रमात्पुरादय आदेशाः स्युः । (५) अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पुरः । (६) अवरस्यास्तातौ परतोऽवादेशो वा स्यात् । अवस्ताद्वसति । (७) क्रियाप्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । (८) द्रव्यस्य संख्यान्तरापादने सङ्ख्यायाः स्वार्थे धा स्यात् । एकं राशिं पञ्चधा कुरु । (९) एकशब्दात्परस्य धा–प्रत्ययस्य ध्यमुआदेशो वा स्यात् । ऐकध्यम् । (१०) आभ्यां 'धा' इत्यस्य धमुञ् स्याद्वा । द्वैधम् । (११) द्वित्रिशब्दात्परस्य 'धा' इत्यस्य धमुञादेशो वा स्यात् । द्वैधम् । (१२) याप्ये वर्त्तमानात्प्रातिपदिकात्स्वार्थे पाशप्स्यात् । भिषक्पाशः । (१३) पूर्णार्थकतीयप्रत्ययान्तात् स्वार्थे अन् स्यात् । द्वितीयः ।

४९ प्रागेकादशभ्योऽच्छन्दसि [1] ।
५० षष्ठाष्टमाभ्यां ञ च [2] ।
५१ मानपश्वङ्गयोः कन्लुकौ च [3] ।
५२ एकादाकिनिच्चासहाये [4] ।
५३ भूतपूर्वे चरट् [5] ।
५४ षष्ठ्या रूप्य च [6] ।
५५ अतिशायने तमबिष्ठनौ [7] ।
५६ तिङश्च [8] ।
५७ द्विवचनविभज्योपपदे तरबीयसुनौ [9] ।
५८ अजादी गुणवचनादेव [10] ।
५९ तुश्छन्दसि [11] ।
६० प्रशस्यस्य श्रः [12] ॥ ३ ॥
६१ ज्य च [13] ।
६२ वृद्धस्य च [14] ।

(१) पूरणप्रत्ययान्ताद्भागे अन् स्यात् । चतुर्थः । (२) आभ्यां ञः स्याच्चादन् । षाष्ठः । (३) षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये । षष्ठकः । (४) एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् स्याच्चात् कन्लुकौ । एकाकी । अत्र वर्त्तमानाच्चरट् स्यात् । आढ्यचरः । (६) षष्ठ्यन्तात्प्रातिपदिकाद्रूप्यः स्यात् चकाराच्चरट् च । देवदत्तरूप्यः । (७) अतिशायनविशिष्टार्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे तमबिष्ठनौ स्तः । दर्शनीयतमः । (८) तिङन्तादतिशये द्योत्ये तमप्स्यात् । पचतितमाम् । (९) द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । लघुतरः । लघीयान् । (१०) इष्ठन्नीयसुनौ गुणवचनादेव स्तः । पटिष्टः । (११) तृन्तृजन्तादिष्ठन्नीयसुनौ स्तश्छन्दसि । (१२) अस्य श्रादेशः स्यादजाद्योः । श्रेष्ठः । (१३) प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः । (१४) अस्य ज्यादेशः स्यादजाद्योः ज्येष्ठः ।

६३ अन्तिकबाढयोर्नेदसाधौ [1] ।

६४ युवाल्पयोः कनन्यतरस्याम् [2] ।

६५ विन्मतोर्लुक् [3] ।

६६ प्रशंसायां रूपप् [4] ।

६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः [5] ।

६८ विभाषा सुपो बहुच् पुरस्तात्तु [6] ।

६९ प्रकारवचने जातीयर् [7] ।

७० प्रागिवात् कः [8] ।

७१ अव्ययसर्वनाम्नामकच् प्राक् टेः [9] ।

७२ कस्य च दः [10] ।

७३ अज्ञाते [11] ।

७४ कुत्सिते [12] ।

७५ संज्ञायां कन् [13] ।

(१) अनयोरेतावादेशौ स्तोऽजाद्योः परतः । नेदिष्ठः । (२) एतयोः कनादेशो वा स्यादिष्ठेयसोः । कनिष्ठः । (३) विनो मतुपश्च लुक्स्यादिष्ठेयसोः । स्रजिष्ठः । (४) प्रशंसाविशिष्टार्थवृत्तेः सुबन्तात्तिङन्ताच्च स्वार्थे रूपप् स्यात् । पटुरूपः । (५) ईषदसमाप्तिविशिष्टेऽर्थे विद्यमानात् सुबन्तात्स्वार्थे कल्पबादयः प्रत्ययाः स्युः । विद्वत्कल्पः । (६) ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रकृतेः प्रागेव न तु परतः । बहुपटुः । (७) सुबन्तात्प्रकारविशिष्टेऽर्थे विद्यमानात् स्वार्थे जातीयर् स्यात् । पटुजातीयः । (८) 'इवे प्रतिकृतौ'इत्यतः प्राक्काधिकारः । (९) अव्ययसर्वनाम्नां टेः प्रागकच् स्यात् । उच्चकैः । (१०) कान्ताव्ययस्य दकारोन्तादेशः स्यादकच्च । धकित् । (११) अज्ञातेऽर्थे कन् । अश्वकः । (१२) कुत्सितेऽर्थे कन् अश्वकः । (१३) कुत्सिते कन्स्यात्तदन्तेन चेत्सञ्ज्ञा गम्यते । शूद्रकः ।

७६ अनुकम्पायाम् ।
७७ नीतौ च तद्युक्तात् ।
७८ बह्वचो मनुष्यनाम्नष्ठज्वा ।
७९ घनिलचौ च ।
८० प्राचामुपादेरडज्वुचौ च ॥४॥
८१ जातिनाम्नः कन् ।
८२ अजिनान्तस्योत्तरपदलोपश्च।
८३ ठाजादावूर्ध्वं द्वितीयादचः ।
८४ शेवलसुपरिविशालवरुणाऽर्यमादीनां तृतीयात् ।
८५ अल्पे ।
८६ ह्रस्वे ।
८७ संज्ञायां कन् ।
८८ कुटीशमीशुण्डाभ्यो रः ।

(१) अनुकम्पायां कः स्यात् । पुत्रकः । (२) सामदानादिरुपायो नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । धानकाः । (३) अनुकम्पिताद्बह्वचो मनुष्यनाम्नो वा ठच् स्यान्नीतौ गम्यमानायाम् । देविकः । (४) अनुकम्पिताद्बह्वचो मनुष्यनाम्नो घनिलचौ स्तो नीतौ । देवियः । (५) उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषयेऽडज्वुचौ स्तः । चाद्यथाप्राप्तम् । उपडः । (६) जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च । सिंहकः । (७) अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन् तस्य चोत्तरपदलोपः । व्याघ्रकः । (८) अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । देविकः । (९) शेवलादीनां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । शेवलिकः । (१०) अल्पे कः स्यात् । तैलकम् । (११) ह्रस्वे कः स्यात् । वृक्षकः । (१२) ह्रस्वहेतुका या सञ्ज्ञा तस्यां गम्यमानायां कन् । वंशकः । (१३) कुट्यादिभ्यो रः

८९ कुत्वा डुपच् ।
९० कासूगोणीभ्यां ष्टरच् ।
९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।
९२ किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ।
९३ वा बहूनां जातिपरिप्रश्ने डतमच् ।
९४ एकाच्च प्राचाम् ।
९५ अवक्षेपणे कन् ।
९६ इवे प्रतिकृतौ ।
९७ संज्ञायां च ।
९८ लुम्मनुष्ये ।
९९ जीविकार्थे चापण्ये ।
१०० देवपथादिभ्यश्च ॥ ५ ॥
१०१ वस्तेर्ढञ् ।
१०२ शिलाया ढः ।
१०३ शाखादिभ्यो यः ।

स्यात् । कुटीरः । (१) कुत्वा डुपच् स्याद्ध्रस्वे । कुतुपः । (२) आभ्यां ष्टरच् ह्रस्वे । कासूतरी । (३) वत्सादिभ्यः ष्टरच् स्यात्तनुत्वे । वत्सतरः । (४) द्वयोरेकस्य निर्धारणे किंयत्तदोर्डतरच् स्यात् । कतरः । (५) बहूनां मध्ये एकस्य निर्धारणे डतमज्वा । कतमः । (६) एकात्प्राचां डतरच् डतमच स्यात्पूर्वविषये । एकतरः । (७) अवक्षेपणे कन् स्यात् । व्याकरणकः । (८) इवार्थे प्रतिकृतौ स्यात् कन् । अश्वकः । (९) इवार्थे कन् स्यात्समुदायेन चेत्सञ्ज्ञा गम्यते । अश्वकः । (१०) सञ्ज्ञायां विहितस्य कनो लुप् मनुष्ये वाच्ये । चञ्चा । (११) जीविकार्थं यदविक्रीयमाणं तस्मिन्वाच्ये कनो लुप् । वासुदेवः । (१२) देवपथादिभ्यः कनो लुप् । देवपथः । (१३) इवार्थे वस्तेर्ढञ् । वास्तेयम् । (१४) इवार्थे शिलाया ढः स्यात् । शैलेयम् । (१५) शाखादिभ्यो यः

१०४ द्रव्यं च भव्ये ।
१०५ कुशाग्राच्छः ।
१०६ समासाच्च तद्विषयात् ।
१०७ शर्करादिभ्योऽण् ।
१०८ अङ्गुल्यादिभ्यष्ठक् ।
१०९ एकशालायाष्ठजन्यतरस्याम्
११० कर्कलोहितादीकक् ।
१११ प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ।
११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।
११३ व्रातच्फञोरस्त्रियाम् ।
११४ आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ।
११५ वृकाट्टेण्यण् ।
११६ दामन्यादित्रिगर्तषष्ठाच्छः ।
११७ पर्श्वादियौधेयादिभ्योऽणञौ ।

स्यादिवार्थे । शाख्यः । (१) द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते । द्रव्यम् । (२) कुशाग्रादिवार्थे छः । कुशाग्रीया । (३) इवार्थविषयात्समासाच्छः स्यात् । काकतालीयः । (४) शर्करादिभ्योऽण् स्यात्स्वार्थे । शार्करम् । (५) अङ्गुल्यादिभ्यष्ठक् इवार्थे । आङ्गुलिकः । (६) एकशालाशब्दादिवार्थे ठञ्वा । पक्षे ठक् । एकशालिकः । (७) आभ्यामिवार्थे ईकक् । कार्कीकः । (८) एभ्यस्थाल्स्याच्छन्दसि । प्रत्नथा । (९) पूगपाचकात्स्वार्थे ञ्यः स्यात् । लौहितध्वज्यः । (१०) व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम् । कौञ्जायन्यः । (११) वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट् । क्षौद्रक्यः । (१२) आयुधजीविसङ्घवाचकाद्वृकाट्टेण्यण् । वार्केण्यः । (१३) दामिन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधसङ्घवाचिभ्यः स्वार्थे छः स्यात् । दामनीयः । (१४) आयुधजीविसङ्घवाचिभ्यः क्रमादणञौ स्तः स्वार्थे ।

११८ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।

११९ ञ्यादयस्तद्राजाः ।

['प्राग्दिशोऽनद्यते विभाषाज्य च जातिनाम्नो वस्तेरेकोनविंशतिः'] ॥

## चतुर्थः पादः ।

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ।

२ दण्डव्यवसर्गयोश्च ।

३ स्थूलादिभ्यः प्रकारवचने कन् ।

४ अनत्यन्तगतौ क्तात् ।

५ न सामिवचने ।

६ बृहत्या आच्छादाने ।

७ अषडक्षाशितंग्वलंकर्मालंपुरुषाऽध्युत्तरपदात् खः ।'

पार्शवः । (१) अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात् । आभिजित्यः । (२) 'पूगाञ्ञ्य' इत्यारभ्य उक्ताः प्रत्ययास्तद्राजसञ्ज्ञाः स्युः । तेनाऽस्त्रियां बहुषु लुक् । लोहितध्वजाः ।

इति पञ्चमाध्यायस्य तृतीय पादः ।

(३) सङ्ख्यादिभ्यां वुन् स्याद्वीप्सायां, प्रकृतेरन्तस्य लोपश्च । द्विपदिकाम् । (४) सङ्ख्यादिभ्यो वुन् स्याद्दण्डव्यवसर्गयोरर्थयोः । प्रकृतेरन्तस्य लोपश्च । द्विपदिकाम् । (५) स्थूलादिभ्यः प्रकारवचने कन् स्यात् । स्थूलकः । (६) क्तान्तात्कन् स्यादनत्यन्तगतौ । छिन्नकम् । (७) समीपपर्याये उपपदे क्तान्तान्न कन् । सामिकृतम् । (८) बृहत्याः कन् स्यादाच्छादने । बृहतिका । (९) एभ्य खः स्यात्स्वार्थे । अषडक्षीणः ।

८ विभाषाऽञ्चेरदिक् स्त्रियाम्।
९ जात्यन्ताच्छ बन्धुनि।
१० स्थानान्ताद्विभाषा सस्थानेनेति चेत्।
११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे।
१२ अमु च छन्दसि।
१३ अनुगादिनष्ठक्।
१४ णचः स्त्रियामञ्।
१५ अणिनुणः।
१६ विसारिणो मत्स्ये।
१७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्।
१८ द्वित्रिचतुर्भ्यः सुच्।
१९ एकस्य सकृच्च।

(१) अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्याद्वा स्वार्थे। प्राक्। प्राचीनम्। (२) जातिशब्दान्तात्प्रातिपदिकाद्बन्धुनि वर्त्तमानात्स्वार्थे छः स्यात्। ब्राह्मणजातीयः। (३) स्थानान्ताच्छो वा स्यात्सस्थानेन=तुल्येन—चेत्स्थानान्तमर्थवत्। पितृस्थानीयः। (४) किम् एदन्तात्तिङन्तादव्ययाच्च यो घस्तदन्तादामुस्यान्न तु द्रव्यप्रकर्षे। किन्तमाम्। (५) किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमुप्रत्ययः स्याच्छन्दसि। प्रतरं नयाम। (६) अनुगादिनष्ठक् स्यात्स्वार्थे। आनुगादिकः। (७) 'कर्मव्यतिहारे णच् स्त्रिया'मिति यो णज्विहितस्तदन्तात्स्वार्थेऽञ् स्यात्स्त्रियाम्। व्यावक्रोशी। (८) अभिविधौ भावे योऽण् तदन्तात्स्वार्थे इनुण् स्यात्। सांराविणं वर्त्तते। (९) मत्स्ये विद्यमानाद्विसारिन्शब्दात्स्वार्थे अण् स्यात्। वैसारिणः। (१०) क्रियाजन्मगणनवृत्तेः सङ्ख्याशब्दात्स्वार्थे कृत्वसुच्। पचकृत्वः। (११) एभ्यः सुच् स्यात्॥ द्विर्भुङ्क्ते। (१२) एकस्य सकृदित्यादेशः स्याच्चा-

२० विभाषा बह्वोर्धाऽविप्रकृष्टकाले ॥ १ ॥
२१ तत्प्रकृतवचने मयट् ।
२२ समूहवच्च बहुषु ।
२३ अनन्तावसथेतिहभेषजाञ्ञ्यः
२४ देवतान्तात्तादर्थ्ये यत् ।
२५ पादार्घाभ्यां च ।
२६ अतिथेर्ञ्यः ।
२७ देवात्तल् ।
२८ अवेः कः ।
२९ यावादिभ्यः कन् ।
३० लोहितान्मणौ ।
३१ वर्णे चाऽनित्ये ।
३२ रक्ते ।
३३ कालाच्च ।

त्सुच् । सकृत् । (१) अविप्रकृष्टकालिकक्रियाजन्मगणनवृत्तेर्बहुशब्दाद्धा प्रत्ययो वा, पक्षे कृत्वसुच् । बहुधा । (२) प्रकृतोपाधिकेऽर्थे वर्त्तमानात्प्रथमान्तात्स्वार्थे मयट् । अन्नमयम् । (३) बहुषु प्रकृतेषूच्यमानेषु स्वार्थे समूहवत् प्रत्यया भवन्ति । चान्मयट् । मौदकिकम् । (४) अनन्तादिभ्यो ञ्यः स्वार्थे । आनन्त्यम् । (५) देवतान्ताच्चतुर्थ्यन्तात्तादर्थ्ये यत् । अग्निदेवत्यम् । (६) पादार्घाभ्यां यत्स्यात्तादर्थ्ये । पाद्यम् । (७) अतिथिशब्दात्तादर्थ्ये ञ्यः स्यात् । आतिथ्यम् (८) देवात्स्वार्थे तल् । देवता । (९) अविशब्दात्कः स्वार्थे । अविकः । (१०) यावादिभ्यः कन् स्यात् । यावकः । (११) लोहितशब्दान्मणौ वर्त्तमानात्स्वार्थे कन् । लोहितकः । (१२) अनित्ये वर्णे विद्यमानाल्लोहितशब्दात्स्वार्थे कन् । लोहितकः कोपेन । (१३) लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन् स्यात् । लोहितिका । (१४) अनित्यवर्णे रक्ते च वर्त्तमानात्कालशब्दात्कन् स्वार्थे ।

३४ विनयादिभ्यष्ठक् ।
३५ वाचो व्याहृतार्थायाम् ।
३६ तद्युक्तात् कर्मणोऽण् ।
३७ ओषधेरजातौ ।
३८ प्रज्ञादिभ्यश्च ।
३९ मृदस्तिकन् ।
४० सस्नौ प्रशंसायाम् ॥ २ ॥
४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ।
४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।
४३ संख्यैकवचनाच्च वीप्सायाम् ।
४४ प्रतियोगे पञ्चम्यास्तसिः ।
४५ अपादाने चाऽहीयरुहोः ।
४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः

कालकम् । (१) विनयादिभ्यष्ठक् स्यात्स्वार्थे । वैनयिकः । (२) संदिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात् स्वार्थे ठक् स्यात् । वाचिकम् । (३) व्याहृतार्थया वाचा यत्कर्म युक्तं तद्वाचकात्कर्मशब्दात्स्वार्थेऽण् प्रत्ययः स्यात् । कार्मणम् । (४) ओषधिशब्दात्स्वार्थेऽण् स्यादजातौ । औषधम् । (५) प्रज्ञादिभ्योऽण् स्यात्स्वार्थे । प्राज्ञः । (६) मृदस्तिकन् स्यात्स्वार्थे । मृत्तिका । (७) प्रशंसोपाधिकेऽर्थे वर्त्तमानान्मृच्छब्दात् सस्नौ प्रत्ययौ स्तः । मृत्सा । (८) आभ्यां तिल्—तातिलौ स्तश्छन्दसि प्रशंसायाम् । वृकतिः । (९) बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दाच्छस्प्रत्ययो वा स्यात् । बहुशः । (१०) सङ्ख्यावाचिभ्य एकवचनाच्च वीप्सायां शस् स्यात् । द्विशः । (११) प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् । प्रद्युम्नः कृष्णतः प्रति । (१२ अपादाने या पञ्चमी तदन्तात्तसिः स्यात् । ग्रामतः । (१३) अकर्तरि तृतीयान्ताद्वा तसिः स्यादतिग्रहादिष्वर्थेषु । चरित्रतो गृह्यते ।

४७ ह्रीयमानपापयोगाच्च ।
४८ षष्ठ्या व्याश्रये ।
४९ रोगाच्चापनयने ।
५० कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।
५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।
५२ विभाषा साति कात्स्न्यें ।
५३ अभिविधौ संपदा च ।
५४ तदधीनवचने ।
५५ देये त्रा च ।
५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।
५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ।
५८ कृञो द्वितीयतृतीयशम्ब-

(१) ह्रीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः । वृत्ततः । (२) षष्ठ्यन्ताद्वा तसिः स्वानानापक्षसमाश्रये । देवा अर्जुनतोऽभवन् । (३) रोगवाचिनः षष्ठ्यन्ताद्वा तसिः स्याच्चिकित्सायाम् । प्रवाहिकातः । (४ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे । कृष्णीकरोति । (५) अरुरादीनां लोपः स्याच्च्विश्च । अरूकरोति । (६) च्विविषये सातिर्वा स्यात् साकल्ये । अग्निसात् । (७) संपदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद्व्याप्तौ । (८) सातिः स्यात् कृभ्वस्तिभिः सम्पदा च योगे । राजसात्करोति । (९) तदधीने देये त्रा स्यात्सातिश्च कृञादियोगे । विप्रत्रा । (१०) देवादिभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा । (११) अनेकाजर्धस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे । पटपटाकरोति । (१२) द्वितीयादिभ्यो डाच् स्यात्कृञ एव योगे कर्षणेऽर्थे । द्वितीयाकरोति ।

बीजात् कृषौ ।
५९ संख्यायाश्च गुणान्तायाः ।
६० समयाच्च यापनायाम् ॥३॥
६१ सपत्रनिष्पत्रादतिव्यथने ।
६२ निष्कुलान्निष्कोषणे ।
६३ सुखप्रियादानुलोम्ये ।
६४ दुःखात् प्रातिलोम्ये ।
६५ शूलात् पाके ।
६६ सत्यादशपथे ।
६७ मद्रात् परिवापणे ।
६८ समासान्ताः ।
६९ न पूजनात् ।
७० किमः क्षेपे ।
७१ नञस्तत्पुरुषात् ।

(१) कृञो योगे कृषौ डाच् स्यात् । द्विगुणाकरोति । (२) समयशब्दात्कृञो योगे डाच् स्याद्यापनायाम् । समयाकरोति । (३) आभ्यामतिव्यथने डाच्स्यात् कृञो योगे । सपत्राकरोति । (४) निष्कुलान्निष्कोषणे वर्त्तमानात्कृञो योगे डाच् । निष्कुलाकरोति । (५) आभ्यामानुलोम्ये डाच्स्यात्कृञो योगे । सुखाकरोति । (६) दुःखशब्दात्प्रातिलोम्ये गम्ये डाच्स्यात्कृञो योगे । दुःखाकरोति । (७) शूलात्पाकविषये डाच्स्यात् कृञो योगे । शूलाकरोति । (८) सत्यादशपथे डाच् स्यात् कृञो योगे । सत्याकरोति । (९) मद्रशब्दात्परिवापणे डाच् कृञो योगे । मद्राकरोति । (१०) आ पादसमाप्तेरधिकारोयम् । (११) पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । (१२) क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । किंराजा । (१३) नञः परे ये वक्ष्यमाणा राजादयस्तदन्तात्तत्पुरुषात्समासान्तो न ।

७२ पथो विभाषा ।

७३ बहुव्रीहौ संख्येये डजबहुगणात् ।

७४ ऋक्पूरब्धूःपथामाऽनक्षे ।

७५ अच्प्रत्यन्ववपूर्वात् सामलोम्नः ।

७६ अक्ष्णोऽदर्शनात्

७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।

७८ ब्रह्महस्तिभ्यां वर्चसः ।

७९ अवसमन्धेभ्यस्तमसः ।

८० श्वसोवसीयः श्रेयसः ॥४॥

८१ अन्ववतप्ताद्रहसः ।

८२ प्रतेरुरसः सप्तमीस्थात् ।

---

अराजा (१) नञ्पूर्वात्पथः समासान्तो वा । अपथम् । (२) संख्येये यो बहुव्रीहिस्तस्माड्डच्स्यात् । उपदशाः । (३) ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात् । अर्धर्चः । (४) एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात् । प्रतिसामम् । (५) अचक्षुःपर्यायादक्ष्णोऽच्स्यात्समासान्तः । गवाक्षः । (६) एते पञ्चविंशत्यजन्ता निपात्यन्ते । अचतुरः । (७) आभ्यां परो यो वर्चःशब्दस्तदन्तात्समासादच्स्यात् । ब्रह्मवर्चसम् । (८) अवसमन्धेभ्यस्तमसोऽच् स्यात् । अवतमसम् । (९) श्वसः परौ यौ वसीयःश्रेयःशब्दौ तदन्तात्समासादच् स्यात् । श्वोवसीयसम् । (१०) अन्ववतप्ताद्रहसः समासान्तोऽच्स्यात् । अनुरहसम् । (११) प्रतेः परो य उरश्शब्दस्तदन्तात्समासादच्

८३ अनुगवमायामे ।
८४ द्विस्तावा त्रिस्तावा वेदिः ।
८५ उपसर्गादध्वनः ।
८६ तत्पुरुषस्याङ्गुलेः संख्या-व्ययादेः ।
८७ अहःसर्वैकदेशसंख्यात-पुण्याच्च रात्रेः ।
८८ अह्नोऽह्न एतेभ्यः ।
८९ न संख्यादेः समाहारे ।
९० उत्तमैकाभ्यां च ।
९१ राजाहःसखिभ्यष्टच् ।
९२ गोरतद्धितलुकि ।
९३ अग्राख्यायामुरसः ।
९४ अनोऽश्मायःसरसां जात-संज्ञयोः ।
९५ ग्रामकौटाभ्यां च तक्ष्णः ।

स्यात्, स च उरश्शब्दः सप्तमीस्थो भवति । प्रत्युरसम् । (१) अयं निपात्यन्ते दीर्घत्वे । अनुगवम् । (२) अत्र अच्प्रत्ययष्टिलोप समासान्तश्च निपात्यते वेदिश्चेदभिधेया । द्विस्तावा । (३) उपसर्गात्परोयोऽध्वन्-शब्दस्तदन्तादच् स्यात् । प्राध्वः ।

(४) सङ्ख्याऽव्ययादेरङ्गुल्य-न्तस्य समासान्तोऽच्स्यात् । द्व्यङ्गुलम् । (५) एभ्यो रात्रेरच्स्यात् चात्सङ्ख्याव्ययादेः । अहोरात्रः । (६) सर्वादिभ्यः परस्याहन्शब्द-स्याह्नादेशःस्यात् समासान्ते परे द्व्यह्नः (७) समाहारे वर्तमानस्य सङ्ख्यादेरहःशब्दस्याऽह्नादेशो न स्यात् । द्व्यहः । (८) उत्तमैकाभ्यां परस्या-हन्छब्दस्याह्नादेशो न । पुण्याहम् । (९) एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । (१०) गोन्तात्तत्पुरुषा-ट्टच्स्यात्समासान्तो न तु तद्धितलुकि । पञ्चगवधनः । (११) उरसशब्दस्या-दग्राख्यायाम् । अश्वोरसम् । (१२) एभ्यष्टच् स्याज्जातौ सञ्ज्ञायाञ्च । उपानसम् । (१३) आभ्यां तक्ष्णष्टच्

९६ अतेः शुनः ।
९७ उपमानादप्राणिषु ।
९८ उत्तरमृगपूर्वाच्च सक्थ्नः ।
९९ नावो द्विगोः ।
१०० अर्धाच्च ॥५॥
१०१ खार्याः प्राचाम् ।
१०२ द्वित्रिभ्यामञ्जलेः ।
१०३ अनसन्तान्नपुंसकाच्छन्दसि
१०४ ब्रह्मणो जानपदाख्यायाम् ।
१०५ कुमहद्भ्यामन्यतरस्याम् ।
१०६ द्वन्द्वाच्चुदषहान्तात् समाहारे ।
१०७ अव्ययीभावे शरत्प्रभृतिभ्यः ।
१०८ अनश्च ।
१०९ नपुंसकादन्यतरस्याम् ।
११० नदीपौर्णमास्याग्रहायणीभ्यः

स्यात् । ग्रामतक्षः । (१) अतेः शुनष्टच् । अतिश्वः । (२) अप्राणिविषयकोपमानवाचिनष्टच्स्यात् । आकर्षश्वः । (३) उत्तरमृगपूर्वाच्च सक्थ्नष्टच् । उत्तरसक्थम् । (४) नौशब्दान्ताद्विगोष्टच् न तु तद्धितलुकि । द्विनावरूप्यः । (५) अर्धान्नावष्टच् । अर्धनावम् । (६) द्विगोरर्धाच्च खार्याष्टज्वा । द्विखारम् । (७) द्वित्रिभ्यामञ्जलेष्टज्वा स्याद्द्विगौ । द्व्यञ्जलम् । (८) अनन्तादसन्ताच्च नपुंसकात्तत्पुरुषाट्टच्समासान्तः । ब्रह्मसामं भवति । (९) ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रब्रह्मः । (१०) कुमहद्भ्यां परस्य ब्रह्मणो वा टच् स्यात् । कुब्रह्मः । (११) चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच्स्यात्समाहारे । वाक्त्वचम् । (१२) शरदादिभ्यष्टच्समासान्तोऽव्ययीभावे । उपशरदम् । (१३) अन्नन्तादव्ययीभावाट्टच्स्यात् । उपराजम् । (१४) अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् । (१५) एभ्यो वा टच् ।

१११ झयः।

११२ गिरेश्च सेनकस्य।

११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्।

११४ अङ्गुलेर्दारुणि।

११५ द्वित्रिभ्यां ष मूर्ध्नः।

११६ अप् पूरणीप्रमाण्योः।

११७ अन्तर्बहिर्भ्यां च लोम्नः।

११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात्।

११९ उपसर्गाच्च।

१२० सुप्रभातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः॥ ६॥

१२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्।

१२२ नित्यमसिच् प्रजामेधयोः।

---

उपनदि। (१) झयन्तादव्ययीभावाट्टज्वा। उपसमिधम्। (२) गिर्यन्तादव्ययीभावाट्टज्वा। उपगिरम्। (३) स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। (४) अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुण्यर्थे। पञ्चाङ्गुलम्। (५) आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। (६) पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणीपञ्चमाः। (७) आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ। अन्तर्लोमः। (८) नासिकान्ताद्बहुव्रीहेरच्स्यान्नासिकाया नसादेशश्च न तु स्थूलपूर्वात्। द्रुणसः। (९) प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच्, नासिकाया नसादेशश्च। उन्नसः। (१०) एते बहुव्रीहावच्प्रत्ययान्ता निपात्यन्ते। सुप्रातः। (११) नञ्दुःसुपूर्वाभ्यामाभ्यामच्स्यात्। अहलः। (१२) नञ्दुःसुभ्यः परयोः प्रजामेधयोरसिच्स्यात्। अप्रजाः।

१२३ [1]बहुप्रजाश्छन्दसि।
१२४ [2]धर्मादनिच् केवलात्।
१२५ [3]जम्भा सुहरिततृणसोमेभ्यः
१२६ [4]दक्षिणेर्मा लुब्धयोगे।
१२७ [5]इच् कर्मव्यतिहारे।
१२८ [6]द्विदण्ड्यादिभ्यश्च।
१२९ [7]प्रसम्भ्यां जानुनोर्ज्ञुः।

१३० [8]ऊर्ध्वाद्विभाषा।
१३१ [9]ऊधसोऽनङ्।
१३२ [10]धनुषश्च।
१३३ [11]वा संज्ञायाम्।
१३४ [12]जायाया निङ्।
१३५ [13]गन्धस्येदुत्पूतिसुसुरभिभ्यः
१३६ [14]अल्पाख्यायाम्।

(१) छन्दसि बहुप्रजा इति निपात्यते। बहुप्रजाः। (२) केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्स्यात्। कल्याणधर्मा। (३) एभ्यो जम्भेति कृतसमासान्तं निपात्यते। सुजम्भा। (४) लुब्धयोगेऽयं निपात्यते। दक्षिणेर्मा। (५) कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच्स्यात्समासान्तः। केशाकेशि। (६) एषां सिद्ध्यर्थमिच्प्रत्ययः स्यात्। द्विदण्डि। (७) आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ। प्रज्ञुः।

(८) ऊर्ध्वात्परस्य जानुशब्दस्य ज्ञुरादेशो वा स्यात्। ऊर्ध्वज्ञुः। (९) ऊधोऽन्तस्य बहुव्रीहेरनङादेशः। कुण्डोध्नी (१०) धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शार्ङ्गधन्वा। (११) धनुरन्तस्य बहुव्रीहेरनङादेशो वा स्यात्सञ्ज्ञायाम्। शतधन्वा। (१२) जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्। युवजानिः। (१३) एभ्यो गन्धस्येकारोन्तादेशः स्यात्। सुगन्धिः। (१४) अल्पवाचिनो गन्धशब्दस्येकारोन्तादेशः स्याद्बहुव्रीहौ। सूपगन्धि।

१३७ उपमानाच्च ।

१३८ पादस्य लोपोऽहस्त्यादिभ्यः ।

१३९ कुम्भपदीषु च ।

१४० संख्यासुपूर्वस्य ॥७॥

१४१ वयसि दन्तस्य दतृ ।

१४२ छन्दसि च ।

१४३ स्त्रियां संज्ञायाम् ।

१४४ विभाषा श्यावारोकाभ्याम् ।

१४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।

१४६ ककुदस्यावस्थायां लोपः ।

१४७ त्रिककुत् पर्वते ।

१४८ उद्विभ्यां काकुदस्य ।

१४९ पूर्णाद्विभाषा ।

(१) उपमानात्परस्य गन्धस्येकारोऽन्तादेशः । पद्मगन्धिः । (२) हस्तादिवर्जितादुपमानात्परस्य पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । व्याघ्रपात् । (३) कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । कुम्भपदी । (४) एतत्पूर्वस्य पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । (५) सङ्ख्यासुपूर्वस्य दन्तस्य दतृ आदेशः स्याद्वयसि । द्विदन् । (६) दन्तस्य दतृशब्दः स्याद्बहुव्रीहौ छन्दसि । उभयतो दतः । (७) दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ सञ्ज्ञायाम् । अयोदती । (८) आभ्यां दन्तस्य दतृ वा स्याद्बहुव्रीहौ । श्यावदन् । (९) एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् । (१०) ककुदस्यावस्थायां लोपः स्यात् । अजातककुत् । (११) त्रिककुदिति पर्वते निपात्यते । त्रिककुत् । (१२) उद्विभ्यां काकुदस्य लोपः । उत्काकुत् । (१३) पूर्णात्काकुदस्य

१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ।
१५१ उरःप्रभृतिभ्य कप् ।
१५२ इनः स्त्रियाम् ।
१५३ नद्यृतश्च ।
१५४ शेषाद्विभाषा ।
१५५ न संज्ञायाम् ।
१५६ ईयसश्च ।
१५७ वन्दिते भ्रातुः ।
१५८ ऋतश्छन्दसि ।
१५९ नाडीतन्त्र्योः स्वाङ्गे ।
१६० निष्प्रवाणिश्च ।

['पादशतस्य तत्प्रकृतवृक-ज्येष्ठाभ्यां सपत्रान्ववतस्मात् स्वार्यां नन्दुसुभ्यो वयसि विंशातिः ।']

वा लोपः । पूर्णकाकुत् । (१) सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृत् । (२) उरःप्रभृतिभ्यः कप् । व्यूढोरस्कः । (३) इन्नन्ताद्बहुव्रीहेः कप् स्यात्स्त्रियाम् । बहुदण्डिका । (४) नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात् । बहुकर्तृकः । (५) अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कब्वा स्यात् । महायशस्कः । (६) शेषादिति प्राप्तः कप् न स्यात्सञ्ज्ञायाम् । विश्वेदेवः । (७) इयसन्तोत्तरपदाद्बहुव्रीहेर्न कप् । बहुश्रेयान् । (८) पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् । प्रशस्तभ्राता । (९) ऋदन्ताद्बहुव्रीहेर्न कप् । हतमाता । (१०) स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात् । बहुनाडिः कायः । (११) अत्र कबभावो निपात्यते । निष्प्रवाणिः ।

इति पञ्चमाध्यायस्य चतुर्थः पादः ।

# अथ षष्ठोऽध्यायः ।

## प्रथमः पादः ।

१ एकाचो द्वे प्रथमस्य ।
२ अजादेर्द्वितीयस्य ।
३ नन्द्राः संयोगादयः ।
४ पूर्वोऽभ्यासः ।
५ उभे अभ्यस्तम् ।
६ जक्षित्यादयः षट् ।
७ तुजादीनां दीर्घोऽभ्यासस्य ।
८ लिटि धातोरनभ्यासस्य ।
९ सन्यङोः ।
१० श्लौ ।
११ चङि ।
१२ दाश्वान्साह्वान्मीढ्वांश्च ।
१३ ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ।

(१–२) अधिकारसूत्रे एते । (३) अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । ऊर्णुनाव । (४) अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससञ्ज्ञः स्यात् । बभूव । (५) षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदितेऽभ्यस्तसञ्ज्ञे स्तः । ददत् । (६) षड्धातवोऽन्ये जक्षितिश्च सप्तमः, एतेऽभ्यस्तसञ्ज्ञाः स्युः । जक्षत् । (७) तुजादीनामभ्यासस्य दीर्घः स्यात् । प्रभरा तूतुजानः । (८) लिटि परेऽनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । बभूव । (९) सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । जुगुप्सते । (१०) धातोर्द्वे स्तः श्लौ । जुहोति । (११) चङि परे ऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य । अचीकमत । (१२) एते क्वस्वन्ता निपात्यन्ते । (१३) ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं स्यात्

१४ बन्धुनि बहुव्रीहौ ।
१५ वचिस्वपियजादीनां किति।
१६ ग्रहिज्यावयिव्यधिवष्टिविच तिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।
१७ लिट्यभ्यासस्योभयेषाम् ।
१८ स्वापेश्चङि ।
१९ स्वपिस्यमिव्येञां यङि ।
२० न वशः ॥ १ ॥
२१ चायः की ।
२२ स्फायः स्फी निष्ठायाम् ।
२३ स्त्यः प्रपूर्वस्य ।
२४ द्रवमूर्तिस्पर्शयोः श्यः ।
२५ प्रतेश्च ।
२६ विभाषाऽभ्यवपूर्वस्य ।

पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे । कौमुदगन्धीपुत्रः । (१) बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद्बहुव्रीहौ । कारीषगन्धीबन्धुः । (२) वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं स्यात्किति। ईजतुः । (३) ग्रह्यादीनां किति ङिति च सम्प्रसारणं स्यात् । ऊयतुः । (४) वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज । (५) ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं स्यात्। असूषुपत् । (६) एषां सम्प्रसारणं स्याद्यङि । सोषुप्यते । (७) वशः सम्प्रसारणं न स्यात् । वावश्यते । (८) यङि परे चायृधातोः कीभावः स्यात् । चेकीयते । (९) स्फायः स्फीभावः स्यान्निष्ठायाम् । स्फीतः । (१०) प्रात्स्त्यः सम्प्रसारणं स्यान्निष्ठायाम् । प्रस्तीतः । (११) द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम् । शीनं घृतम् । (१२) प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यात् । प्रतिशीनः । (१३) अभ्यवपूर्वस्य श्यः सम्प्रसारणं वा स्यात् । अभिष्यानं घृतम् ।

२७ श्रृतं पाके ।
२८ प्यायः पी ।
२९ लिड्यङोश्च ।
३० विभाषा श्वेः ।
३१ णौ च संश्चङोः ।
३२ ह्वः सम्प्रसारणम् ।
३३ अभ्यस्तस्य च ।
३४ बहुलं छन्दसि ।
३५ चायः की ।
३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्रातािश्रितमाशीराशीर्ताः ।
३७ न संप्रसारणे संप्रसारणम् ।
३८ लिटि वयो यः ।
३९ वश्चास्यान्यतरस्यां किति ।
४० वेञः ॥ २ ॥

(१) श्रानिश्रपयत्योः क्ते शृभावो निपात्यते क्षीरहविषोः पाके । शृतं क्षीरम् । (२) प्यायः पी वा स्यान्निष्ठायाम् । पीनं मुखम् । (३) लिटि यङि च प्यायः पीभावः स्यात् । पिप्ये । (४) श्वयतेः सम्प्रसारणं वा स्याल्लिटि यङि च । शुशाव । (५) सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यात् । अशूशवत् । (६) सन्परे चङ्परे च णौ ह्वः सम्प्रसारणं स्यात् । अजूहवत् । (७) अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात् । जुहाव । (८) ह्वः सम्प्रसारणं स्याद्बहुलं छन्दसि । इन्द्रमाहुव । (९) चायतेर्बहुलं कीत्ययमादेशः स्यात् । न्यन्यं चिक्युः । (१०) एते छन्दसि निपात्यन्ते । इन्द्रश्च विष्णो यदपस्पृधेथाम् । (११) सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात् । यूनः । (१२) लिटि वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः । (१३) वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । (१४) वेञः सम्प्रसारणं न स्याल्लिटि । ववौ ।

४१ ल्यपि च ।
४२ ज्यश्च ।
४३ व्यश्च ।
४४ विभाषा परेः ।
४५ आदेच उपदेशेऽशिति ।
४६ न व्यो लिटि ।
४७ स्फुरतिस्फुलत्योर्घञि ।
४८ क्रीङ्जीनां णौ ।
४९ सिध्यतेरपारलौकिके ।
५० मीनातिमिनोतिदीङां ल्यपि च ।
५१ विभाषा लीयतेः ।
५२ खिदेश्छन्दसि ।
५३ अपगुरो णमुलि ।
५४ चिस्फुरोर्णौ ।
५५ प्रजने वीयतेः ।

(१) वेञो ल्यपि सम्प्रसारणं न स्यात् । प्रवाय । (२) जिनातेर्ल्यपि सम्प्रसारणं न स्यात् । प्रज्याय । (३) व्येञः सम्प्रसारणं न स्याल्ल्यपि । प्रव्याय । (४) परेर्व्येञो वा सम्प्रसारणं स्याल्ल्यपि । परिवीय । (५) उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति । दधौ । (६) वेञ आत्वं न स्याल्लिटि । विव्याय । (७) अनयोरेच आत्वं स्याद्घञि । स्फारः । (८) एषामेच आत्वं स्याण्णौ । क्रापयति । (९) ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्वं स्याण्णौ । अन्नं साधयति । (१०) एषामात्वं स्याल्ल्यपि चकारादशित्यञ्निमित्ते । दाता । (११) लीलीङोरात्वं वा स्यादज्विषये ल्यपि च । लेता । (१२) खिदेरेच आद्वा स्याच्छन्दसि । चिखाद । (१३) 'गुरी उद्यमने' इत्यस्यैचो वा आत्स्याण्णमुलि । अपगारम् । (१४) चिस्फुरोर्णावात्वं वा स्यात् । चपयति । (१५) अस्यैच आत्वं वा स्याण्णौ प्रजनेऽर्थे । वापयति ।

५६ बिभेतेर्हेतुभये[1] ।
५७ नित्यं स्मयतेः[2] ।
५८ सृजिदृशोर्झल्यमकिति[3] ।
५९ अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्[4] ।
६० शीर्षंश्छन्दसि[5] ॥ ३ ॥
६१ ये च तद्धिते[6] ।
६२ अचि शीर्षः[7] ।
६३ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु[8] ।
६४ धात्वादेः षः सः[9] ।
६५ णो नः[10] ।
६६ लोपो व्योर्वलि[11] ।
६७ वेरपृक्तस्य[12] ।
६८ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्[13] ।

(१) बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत् । मुण्डो भापयते । (२) स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते । (३) अनयोरमागमः स्याज्झलादावकिति । दद्रष्ठ । (४) उपदेशेऽनुदात्तो य ऋदुपधस्तस्याऽम्वा स्याज्झलादावकिति परे । स्रप्ता ।
(५) शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्ष्णः शीर्ष्णो जगतः । (६) यादौ तद्धिते परे शिरःशब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । (७) इदं वार्त्तिकं सूत्रेषु कैश्चित् प्रक्षिप्तम् । अजादौ तद्धिते शिरसः शीर्षादेशः । स्थौलशीर्षम् । (८) पादादीनां पदादय आदेशाः स्युः शसादौ वा । पदः । (९) धातोरादेः षस्य सः स्यात् । अनुस्वदते । (१०) धातोरादेर्णस्य नः स्यात् । नदति । (११) वकारयकारयोर्लोपः स्याद्वलि परतः । (१२) अपृक्तस्य वस्य लोपः स्यात् । (१३) हलन्तात्परं, दीर्घौ यौ ङ्यापौ

६९ एङ्ह्रस्वात् संबुद्धेः[1] ।
७० शेश्छन्दसि बहुलम्[2] ।
७१ ह्रस्वस्य पिति कृति तुक्[3] ।
७२ संहितायाम्[4] ।
७३ छे च[5] ।
७४ आङ्माङोश्च[6] ।
७५ दीर्घात्[7] ।
७६ पदान्ताद्वा[8] ।
७७ इको यणचि[9] ।
७८ एचोऽयवायावः[10] ।
७९ वान्तो यि प्रत्यये[11] ।
८० धातोस्तन्निमित्तस्यैव[12] ॥४॥
८१ क्षय्यजय्यौ शक्यार्थे[13] ।
८२ क्रय्यस्तदर्थे[14] ।
८३ भय्यप्रवय्ये च च्छन्दसि[15] ।

तदन्ताच्च परं,–सुतिसीत्यतदपृक्तं हल्लुप्यते। सखा। (१) एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। (२) शेश्छन्दसि बहुलं लोपः स्यात्। या ते गात्राणाम्। (३) ह्रस्वस्य तुगागमः स्यात्पिति कृति। इत्यः। (४) अधिकारोऽयम्। (५) ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम्। (६) एतयोश्छे परे तुक् स्यात्। आच्छादयति। (७) दीर्घाच्छे परे तुक् स्यात्। चेच्छिद्यते। (८) दीर्घात्पदान्ताच्छे परे तुग्वा स्यात्। लक्ष्मीच्छाया। (९) इकः स्थाने यण् स्यादचि संहितायां विषये। सुद्ध्युपास्यः। (१०) एचः क्रमादय् अव् आय् आव् एते स्युरचि। हरये। (११) यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यूतिः। (१२) यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव, नान्यस्य। लव्यम्। (१३) एतौ शक्यार्थे निपात्येते। (१४) तदर्थे 'क्रय्य' इति निपात्यते। (१५) एतौ

८४ एकः पूर्वपरयोः ।
८५ अन्तादिवच्च ।
८६ षत्वतुकोरसिद्धः ।
८७ आद्गुणः ।
८८ वृद्धिरेचि ।
८९ एत्येधत्यूठ्सु ।
९० आटश्च ।
९१ उपसर्गादृति धातौ ।
९२ वा सुप्यापिशलेः ।
९३ औतोम्शसोः ।
९४ एङि पररूपम् ।
९५ ओमाङोश्च ।
९६ उस्यपदान्तात् ।
९७ अतो गुणे ।

छन्दसि निपात्येते । (१) अधिकारोऽयम् । (२) योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । (३) षत्वं, तुकि च कर्त्तव्ये एकादेशशास्त्रमसिद्धं स्यात् । कोऽसिचत् । (४) अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् । उपेन्द्रः । (५) आदेचि परे वृद्धिरेकादेशः स्यात् । कृष्णैकत्वम् । (६) अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति । (७) आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । (८) अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ।

(९) अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् । प्रार्षभीयति । (१०) ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । गाम् । (११) आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । (१२) ओमि आङि चात्परे पररूपमेकादेशः स्यात् । (१३) अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । भिन्द्युः । (१४) अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् । भवन्ति ।

९८ अव्यक्तानुकरणस्यात इतौ ।
९९ नाम्रेडितस्यान्त्यस्य तु वा ।
१०० नित्यमाम्रेडिते डाचि ॥५॥
१०१ अकः सवर्णे दीर्घः ।
१०२ प्रथमयोः पूर्वसवर्णः ।
१०३ तस्माच्छसो नः पुंसि ।
१०४ नादिचि ।
१०५ दीर्घाज्जसि च ।
१०६ वा छन्दसि ।
१०७ अमि पूर्वः ।
१०८ संप्रसारणाच्च ।
१०९ एङः पदान्तादति ।
११० ङसिङसोश्च ।

(१) ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात्। पटिति । (२) आम्रेडितस्य प्रागुक्तं न स्यात्। अन्त्यस्य तु तकारमात्रस्य वा स्यात्। पटत्पटेति । (३) वार्त्तिकमेतत् । डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोः पररूपं स्यात्। पटपटाकरोति । (४) अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः । (५) अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। हरी । (६) पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि । रामान् । (७) अवर्णादिचि परे न पूर्वसवर्णदीर्घः । रामौ । (८) दीर्घाज्जसि इचि च परे न प्रथमयोः पूर्वसवर्णदीर्घः । गौर्यौ । (९) दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो वा स्याच्छन्दसि । वाराही । (१०) अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामम्। (११) सम्प्रसारणादचि परे पूर्वरूपमेकादेशः स्यात्। विश्वौहः । (१२) पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽत्र । (१३) एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्।

१११ ऋत उत्।
११२ ख्यत्यात् परस्य।
११३ अतो रोरप्लुतादप्लुते।
११४ हशि च।
११५ प्रकृत्याऽन्तःपादमव्यपरे।
११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च।
११७ यजुष्युरः।
११८ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे।
११९ अङ्ग इत्यादौ च।
१२० अनुदात्ते च कुधपरे।
१२१ अवपथासि च।
१२२ सर्वत्र विभाषा गोः।

हरेः। (१) ऋदन्तान्ङसिङसोरति परे उकार एकादेशः स्यात्। क्रोष्टुः। (२) खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां ङसिङसोरत उत्स्यात्। सख्युः। (३) अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। शिवोऽर्च्यः। (४) अप्लुतादतः परस्य रो रुः स्याद्धशि। शिवोवन्द्यः। (५) ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति न तु वकारयकारपरेऽति। उपप्रयन्तो अध्वरम्। (६) एषु व्यपरेऽप्यति एङ् प्रकृत्या। वसुभिर्नो अव्यात्। (७) उरःशब्द एङन्तोऽति प्रकृत्या यजुषि। उरो अन्तरिक्षम्। (८) एते यजुष्यति प्रकृत्या। आपो अस्मान्। (९) अङ्गशब्दे य एङ् तदादौ च अकारे य एङ्पूर्वः सोऽति प्रकृत्या यजुषि। प्राणो अङ्गे। (१०) कवर्गधकारपरेऽनुदात्तेऽति परे एङ् प्रकृत्या यजुषि। अयं सो अग्निः। (११) अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या। त्री रुद्रेभ्यो अवपथाः। (१२) लोके-

१२३ अवङ् स्फोटायनस्य ।
१२४ इन्द्रे च नित्यम् ।
१२५ प्लुतप्रगृह्या अचि नित्यम् ।
१२६ आङोऽनुनासिकश्छन्दसि ।
१२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।
१२८ ऋत्यकः ।
१२९ अप्लुतवदुपस्थिते ।
१३० ई ३ चाक्रवर्मणस्य ।
१३१ दिव उत् ।
१३२ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।
१३३ स्यश्छन्दसि बहुलम् ।
१३४ सोऽचि लोपे चेत् पादपूरणम् ।

वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गो अग्रम् ।

(१) अचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । (२) गोरवङ् स्यादिन्द्रे । गवेन्द्रः । (३) प्लुताः प्रगृह्याश्च अचि परे नित्यं प्रकृत्या स्युः । (४) आङोऽचि परे अनुनासिकः स्यात्स च प्रकृत्या । अभ्र आँ अपः । (५) पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा । चक्रि अत्र । (६) ऋतिपरेऽकः प्राग्वद्वा । ब्रह्म ऋषिः । (७) उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति । सुश्लोकेति ।

(८) ई ३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । अग्नी ३ इति । (९) दिवोऽन्तादेश उकारःस्यात्पदान्ते । द्युभ्याम् । (१०) अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि नतु नञ्समासे । एष विष्णुः । (११) 'स्यस्' इत्यस्य सोर्लोपः स्याद्धलि । एष स्य भानुः । (१२) सस् इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेनामविड्ढि ।

१३५ [1]सुट्कात्पूर्वः ।
१३६ [2]अडभ्यासव्यवायेऽपि ।
१३७ [3]संपरिभ्यां करोतौ भूषणे ।
१३८ [4]समवाये च ।
१३९ [5]उपात्प्रतियत्नवैकृतवा-
क्याध्याहारेषु च ।
१४० [6]किरतौ लवने ।
१४१ [7]हिंसायां प्रतेश्च ।
१४२ [8]अपाच्चतुष्पाच्छकुनिष्वा-
लेखने ।
१४३ [9]कुस्तुम्बुरूणि जातिः ।
१४४ [10]अपस्पराः क्रियासातत्ये ।
१४५ [11]गोष्पदं सेवितासेवित-
प्रमाणेषु ।
१४६ [12]आस्पदं प्रतिष्ठायाम् ।
१४७ [13]आश्चर्यमनित्ये ।
१४८ [14]वर्चस्केऽवस्करः ।
१४९ [15]अपस्करो रथाङ्गम् ।

(१) अडभ्यासव्यवायेऽपि कात्पूर्वः सुट् स्यात् । (२) इदं वार्त्तिकं सूत्रेषु कैश्चित्प्रक्षिप्तम् । उपास्किरत् । (३-४) संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे सङ्घाते चार्थे । संस्करोति । (५) उपात्कृञः सुट् स्यादेष्वर्थेषु । चात्प्रागुक्तयोर्थयोः । उपस्कृता कन्या । (६) उपात्किरतेः सुट्स्याच्छेदेर्थे । उपस्किरति । (७) उपात्प्रतेश्च किरतेः सुट्स्याद्धिंसायाम् । उपस्किरति । (८) अपात्किरतेः सुट्स्यादालेखने । अपस्किरते वृषो हृष्टः । (९) अत्र सुण्निपात्यते । (१०) सुट् निपात्यते । अपरस्पराः सार्थं गच्छन्ति । (११) अत्र सुट् सस्य षत्वञ्च निपात्यते । गोष्पदम् । (१२) आतमयापनाय स्थाने सुट् निपात्यते । आस्पदम् । (१३) अद्भुते सुट् नियात्यते । आश्चर्यं यदि स भुञ्जीत । (१४) वर्चस्केऽवस्कर इति निपात्यते । वर्चस्कम् । (१५) रथाङ्गेऽपस्कर इति निपात्यते ।

१५० विष्किरः शकुनिर्विकिरो वा।
१५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे।
१५२ प्रतिष्कशश्च कशेः।
१५३ प्रस्कण्वहरिश्चन्द्रावृषी।
१५४ मस्करमस्करिणौ वेणुपरिव्राजकयोः।
१५५ कास्तीराऽजस्तुन्दे नगरे।
१५६ कारस्करो वृक्षः।
१५७ पारस्करप्रभृतीनि च सञ्ज्ञायाम्।
१५८ अनुदात्तं पदमेकवर्जम्।
१५९ कर्षात्वतो घञोऽन्त उदात्तः।
१६० उञ्छादीनां च।
१६१ अनुदात्तस्य च यत्रोदात्तलोपः।
१६२ धातोः।
१६३ चितः।
१६४ तद्धितस्य।

(१) अत्र वा सुट् निपात्यते। (२) चन्द्रे उत्तरपदे ह्रस्वात्परः सुट् मन्त्रे। सुश्चन्द्रः। (३) 'प्रतिष्कश' इति निपात्यते। (४) एतौ निपात्येते ऋषी। (५) मकरशब्दस्य सुडिनिश्च निपात्यते। (६) एतौ नगरे निपात्येते। (७) वृक्षेऽयं निपात्यते। (८) एतानि ससुट्कानि निपात्यन्ते। पारस्करः। (९) यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात्। गोपायतं नः। (१०) कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तः। कर्षः। (११) उञ्छादीनामन्त उदात्तः स्यात्। युगं युगे (१२) यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात्। देवीं वाचम्। (१३) धातोरन्त उदात्तः स्यात्। गोपायतं नः। (१४) चितोऽन्त उदात्तः स्यात्। नभन्तामन्यके। (१५) चितस्तद्धितस्यान्त उदात्तः। कौञ्जायनाः।

१६५ कितः ।
१६६ तिसृभ्यो जसः ।
१६७ चतुरः शसि ।
१६८ सावेकाचस्तृतीयादिर्विभक्तिः ।
१६९ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।
१७० अञ्चेश्छन्दस्यसर्वनामस्थानम् ।
१७१ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ।
१७२ अष्टनो दीर्घात् ।
१७३ शतुरनुमो नद्यजादी ।
१७४ उदात्तयणो हल्पूर्वात् ।
१७५ नोङ्धात्वोः ।
१७६ ह्रस्वनुड्भ्यां मतुप् ।

---

(१) कितस्तद्धितस्यान्त उदात्तः । यदाग्नेयः । (२) अन्त उदात्तः तिस्रो द्यावः । (३) चतुरोऽन्त उदात्तः शसि परतः । चतुरः पश्य । (४) सप्तमीबहुवचने य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा त्रिरूपः । (५) नित्याधिकारविहितसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिविभक्तिरन्तोदात्ता वा स्यात् । परमवाचा । (६) अञ्चेः परा विभक्तिरुदात्ता । इन्द्रो दधीचः । (७) एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । (८) दीर्घादष्टनः परा शसादिविभक्तिरुदात्ता । अष्टाभिः । (९) अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिविभक्तिरुदात्ता स्यात् । जानती । (१०) उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिविभक्तिश्च उदात्ता स्यात् । चोदयित्री सूनृतानाम् । (११) ऊङ्धात्वोर्यणः परे शसाद्य उदात्ता न स्युः । ब्रह्मबन्ध्वा । (१२) ह्रस्वान्तादन्तो-

१७७ नामन्यतरस्याम् ।
१७८ ङ्याश्छन्दसि बहुलम् ।
१७९ षट्त्रिचतुर्भ्यो हलादिः ।
१८० झल्युपोत्तमम् ।
१८१ विभाषा भाषायाम् ।
१८२ न गोश्वन्साववर्णराडङ्क्रुङ्क्रुद्भ्यः ।
१८३ दिवो झल् ।
१८४ नृ चान्यतरस्याम् ।
१८५ तित्स्वरितम् ।
१८६ तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ।
१८७ आदिः सिचोऽन्यतरस्याम्
१८८ स्वपादिर्हिंसामच्यनिटि ।

दात्तान्नुटश्च परो मतुबुदात्तः । (१) मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा । (२) ङ्याः परो नामुदात्तो वा । (३) षड्भ्यो हलादिर्विभक्तिरुदात्ता । षड्भिः । (४) षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यात् । पञ्चभिः । (५) षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं वा स्याद्भाषायाम् । (६) गवादिभ्यः प्रागुक्तं न । गवां शता । (७) दिवः परा झलादिर्विभक्तिर्नोदात्ता । द्युभिः । (८) नुः परा झलादिर्विभक्तिर्वोदात्ता । नृभिः । (९) तित्स्वरितं स्यात् । क्व नूनम् । (१०) तास्यादिभ्यः परं लसार्वधातुकमनुदात्तं स्यात् । कर्त्ता । (११) सिजन्तस्य आदिरुदात्तो वा । यासिष्टम् । (१२) स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात् । स्वपन्ति ।

१८९ अभ्यस्तानामादिः ।
१९० अनुदात्ते च ।
१९१ सर्वस्य सुपि ।
१९२ भीह्रीभृहुमदजनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ।
१९३ लिति ।
१९४ आदिर्णमुल्यन्यतरस्याम् ।
१९५ अचः कर्तृयकि ।
१९६ थलि च सेटीडन्तो वा ।
१९७ ञ्नित्यादिर्नित्यम् ।
१९८ आमन्त्रितस्य च ।
१९९ पथिमथोः सर्वनामस्थाने ।
२०० अन्तश्च तवै युगपत् ॥१०॥
२०१ क्षयो निवासे ।
२०२ जयः करणम् ।
२०३ वृषादीनि च ।

(१) अनित्यजादौ लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः स्यात् । ये ददति । (२) अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः । दधासि रत्नम् । (३) सर्वस्य सुपि आदिरुदात्तः । सर्वः । (४) भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात् । जुहोति । (५) प्रत्ययात्पूर्वमुदात्तम् । चिकीर्षकः । (६) अभ्यस्तानामादिरुदात्तो वा णमुलि परे । लोलूयं-लोलूयम् । (७) उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वा । लूयते केदारः । (८) सेटि थलन्ते पदे इडुदात्त आदिरन्तो वा स्यात् । लुलविथ । (९) ञिदन्तस्य निदन्तस्य चादिरुदात्तः स्यात् । पौंस्या । (१०) आमन्त्रितस्यादिरुदात्तः स्यात् । (११) आदिरुदात्तः । पन्थाः । (१२) तवैप्रत्ययान्तस्य युगपदाद्युदात्तौ स्तः । दातवा उ । (१३) क्षयो निवासे आद्युदात्तः । क्षये । (१४) करणवाची जयशब्द आद्युदात्तः । जयोऽश्वः । (१५) वृषा-

२०४ संज्ञायामुपमानम् ।
२०५ निष्ठा च द्व्यजनात् ।
२०६ शुष्कधृष्टौ ।
२०७ आशितः कर्ता ।
२०८ रिक्ते विभाषा ।
२०९ जुष्टार्पिते च च्छन्दसि ।
२१० नित्यं मन्त्रे ।
२११ युष्मदस्मदोर्ङसि ।
२१२ ङयि च ।
२१३ यतोऽनावः ।
२१४ ईडवन्दवृशंसदुहां ण्यतः ।
२१५ विभाषा वेण्विन्धानयोः ।
२१६ त्यागरागहासकुहश्वठक्रथानाम् ।
२१७ उपोत्तमं रिति ।
२१८ चङ्यन्यतरस्याम् ।
२१९ मतोःपूर्वमात्संज्ञायां स्त्रियाम् ।

दीनामादिरुदात्तः । (१) उपमानशब्दः सञ्ज्ञायामाद्युदात्तः । चञ्चा । (२) निष्ठान्तस्य द्व्यचः सञ्ज्ञायामादिरुदात्तो नत्वाकारः । दत्तः । (३) एतावाद्युदात्तौ स्तः । शुष्कम् । (४) कर्तृवाची आशितशब्द आद्युदात्तः । आशितम् । (५) रिक्तशब्दो वा आदिरुदात्तः । रिक्तः । (६) एते आद्युदात्ते वा स्तः । (७) मन्त्रे एते नित्यमाद्युदात्ते स्तः । (८) युष्मदस्मदोर्ङसि आदिरुदात्तः स्यात् । महिषस्तव (९) अनयोरादिरुदात्तः स्यान्ङयि । तुभ्यम् । (१०) यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विना । काम्याः । (११) एषां ण्यदन्तानामादिरुदात्तः । ईड्यः । (१२) अनयोरादिरुदात्तो वा । इन्धानो अग्निम् (१३) एषामादिरुदात्तो वा । (१४) रित्प्रत्ययान्तस्य उपोत्तममुदात्तं स्यात् । यदाहवनीये । (१५) चङन्ते धातावुपोत्तममुदात्तं वा । मा हि चीकरताम् । (१६) मतोः पूर्वमाकार उदात्तः

२२० अन्तोऽवत्याः ।६१।
२२१ ईवत्याः ।
२२२ चौ ।
२२३ समासस्य ।
['एकाचश्चायो ल्यपि च ये च क्षय्यजय्यावक्रः सवर्णोऽवपथाहिंसायामनुदात्तस्य विभाषा क्षय ईवत्यास्त्रीणि'] ।

स्त्रनाम्नि । उदुम्बरावती । (१) अवतीशब्दस्याऽन्त उदात्तः । वेत्रवती । (२) ईवत्यन्तस्यान्त उदात्तः । अहीवती । (३) लुप्ताऽकारेऽऽञ्चतौ परतः पूर्वस्यान्त उदात्तः । देवद्रीचीं नयत । (३) समासस्यान्त उदात्तः स्यात् । यज्ञश्रियम् ।

इति षष्ठाध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।
१ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।
३ वर्णो वर्णेष्वनेते ।
४ गाधलवणयोः प्रमाणे ।
५ दायाद्यं दायादे ।
६ प्रतिबन्धि चिरकृच्छ्रयोः ।

(५) उदात्तस्वरितयोगि पूर्वपदं प्रकृत्या स्यात् । सत्यश्चित्रश्रवस्तमः । (६) सप्तैते पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यश्वेतः । (७) वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । (८) एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या स्यात् । अरित्रगाधमुदकम् । (९) तत्पुरुषे प्रकृत्या । धनदायादः । (१०) प्रतिबन्धवाचि पूर्वपदं प्रकृत्या एतयोः परतस्तत्पुरुषे । गमनचिरम् ।

७ पदेऽपदेशे ।
८ निवाते वातत्राणे ।
९ शारदेऽनार्तवे ।
१० अध्वर्युकषाययोर्जातौ ।
११ सदृशप्रतिरूपयोः सादृश्ये ।
१२ द्विगौ प्रमाणे ।
१३ गन्तव्यपण्यं वाणिजे ।
१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ।
१५ सुखप्रिययोर्हिते ।
१६ प्रीतौ च ।
१७ स्वं स्वामिनि ।
१८ पत्यावैश्वर्ये ।

(१) व्याजवाचिनि पदशब्दे उत्तरपदे पूर्वपदं प्रकृत्या तत्पुरुषे। मूत्रपदेन प्रस्थितः। (२) निवातशब्दे परे वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृत्या। कुटीनिवातम्। (३) ऋतौ भवमार्तवम्, तदन्यवाचिनि शारदशब्दे परे तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। रज्जुशारदमुदकम्। (४) एतयोःपरतो जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। अध्वर्युः। (५) अनयोः पूर्वं प्रकृत्या। पितृसदृशः। (६) द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। प्राच्यसप्तसमः। (७) वाणिज्यशब्दे परे तत्पुरुषे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरम्। मद्रवाणिजः। (८) मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे तथा। भिक्षामात्रम्। (९) एतयोः परयोर्हितवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। गमनसुखम्। (१०) प्रीतौ गम्यायां प्रागुक्तम्। ब्राह्मणसुखम्। (११) स्वामिशब्दे परे स्ववाचि पूर्वपदं प्रकृतिस्वरम्। गोस्वामी। (१२) पतिशब्दे उत्तरपदे ऐश्वर्य-

१९ न भूवाक्चिद्दिधिषु।
२० वा भुवनम् ॥ १ ॥
२१ आशङ्काऽऽबाधनेदीयःसु सम्भावने।
२२ पूर्वे भूतपूर्वे।
२३ सविधसनीडसमर्यादस-वेशसदेशेषु सामीप्ये।
२४ विस्पष्टादीनि गुणवचनेषु।
२५ श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये।
२६ कुमारश्च।
२७ आदिः प्रत्येनसि।
२८ पूगेष्वन्यतरस्याम्।
२९ इगन्तकालकपालभगाल-शरावेषु द्विगौ।
३० बह्वन्यतरस्याम्।

वाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। (१) पतिशब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे नैतानि प्रकृत्या। भूपतिः। (२) पतिशब्दे परे ऐश्वर्यवाचिनि तत्पुरुषे भुवनशब्दो वा प्रकृत्या। भुवनपतिः। (३) एषूत्तरपदेषु संभावनावाचिनि तत्पुरुषे पूर्वपदं प्रकृति स्वरम्। (४) भूतपूर्वार्थे पूर्वशब्दे उत्तरपदे तत्पुरुषे पूर्वपदं प्रकृतिस्वरम्। (५) एषु परेषु पूर्वः प्रकृत्या। मद्रसविधम्। (६) गुणवचनेषूत्त-रपदेषु विस्पष्टादीनि प्रकृतिस्वराणि। (७) 'श्र' 'ज्य' 'कन्' इत्यादेशवति, अवमशब्दे, पाप-शब्दवति चोत्तरपदे भाववाचि पूर्वपदं प्रकृत्या। गमनश्रेष्ठम्। (८) कुमारशब्दः पूर्वपदं कर्मधारये प्रकृतिस्वरम्। (९) प्रत्येनसि उत्तर-पदे कुमारस्यादिरुदात्तः कर्मधारये। (१०) पूगवाचिन्युत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो वा। (११) एषु परेषु पूर्वं प्रकृत्या। पञ्चारत्निः। (१२) बहुशब्दस्तथा वा। बह्वरत्निः।

३१ दिष्टिवितस्त्योश्च [1]।

३२ सप्तमी [2] सिद्धशुष्कपक्वबन्धे-ष्वकालात् ।

३३ परिप्रत्युपापा [3] वर्ज्यमाना-होरात्रावयवेषु ।

३४ राजन्यबहुवचनद्वन्द्वेऽन्धक-वृष्णिषु [4] ।

३५ संख्या [5] ।

३६ आचार्योपसर्जनश्चान्तेवासी [6]

३७ कार्तकौजपादयश्च [7] ।

३८ महान्व्रीह्यपराह्णगृष्टीष्वास-जाबालभारभारतहैलिहिल रौरवप्रवृद्धेषु [8] ।

३९ क्षुल्लकश्च वैश्वदेवे [9] ।

४० उष्ट्रः [10] सादिवाम्योः ॥ २ ॥

४१ गौः [11] सादसादिसारथिषु ।

४२ कुरुगार्हपतरिक्तगुर्वसूत- [12]

(१) एतयोः परतः पूर्वपदं प्रकृत्या वा द्विगौ । पञ्चदिष्टिः। (२) अकाल-वाचि सप्तम्यन्तं प्रकृत्या सिद्धा-दिषु । साङ्काश्यसिद्धः । (३) एते प्रकृत्या वर्ज्यमानवाचिनि अहोरात्रा-वयववाचिनि चोत्तरपदे । परित्रिगर्तं देवो वृष्टः । (४) राजन्यवाचिनां बहुवचनान्तानामन्धकवृष्णिषु वर्त्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या । श्वाफल्क-चैत्रकाः। (५) सङ्ख्यावाचि पूर्वपदं प्रकृत्या द्वन्द्वे। द्वादश । (६) आ-चार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्व-पदं प्रकृत्या । पाणिनीयरौढीयाः । (७) एषां द्वन्द्वे पूर्वपदं प्रकृत्या । कार्त-कौजपौ । (८) महच्छब्दः प्रकृत्या व्रीह्यादिषु दशसु परेषु । महाव्रीहिः । (९) क्षुल्लकशब्दो महच्छब्दश्च प्रकृत्या वैश्वदेवे उत्तरपदे । क्षुल्लकवैश्वदेवम्। (१०) उष्ट्रशब्दः प्रकृत्या स्यात् एतयोः परयोः । उष्ट्रसादी । (११) एषु परेषु गोशब्दः प्रकृत्या स्यात् । गोसादः (१२) एषां

जरत्यश्लीलदृढरूपापारेव-
डवातैतिलकद्रूपण्यकम्बलो-
दासीभाराणां च ।
४३ चतुर्थी तदर्थे ।[1]
४४ अर्थे ।[2]
४५ क्ते च ।[3]
४६ कर्मधारयेऽनिष्ठा ।[4]
४७ अहीने द्वितीया ।[5]

सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या । कुरुगार्हपतम् ।
(१) चतुर्थ्यन्तार्थाय यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपदारु । (२) अर्थे परे चतुर्थ्यन्तं प्रकृत्या । देवार्थम् । (३) क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या । गोहितम् । (४) क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या । श्रेणिकृताः । (५) अहीनवाचिनि समासे क्तान्ते परे द्वितायान्तं प्रकृत्या । कष्टश्रितः । (६) कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या । स्वोतासः ।

४८ तृतीया कर्मणि ।[6]
४९ गतिरनन्तरः ।[7]
५० तादौ च निति कृत्यतौ ।[8]
५१ तवै चान्तश्च युगपत् ।[9]
५२ अनिगन्तोऽञ्चतौ वप्रत्यये ।[10]
५३ न्यधी च ।[11]
५४ ईषदन्यतरस्याम् ।[12]

(७) कर्मार्थे क्तान्तेपरेऽव्यवहितो- गतिः प्रकृत्या । पुरोहितम् । (८) तकारादौ निति तुशब्दवर्जिते कृति परेऽनन्तरो गतिः प्रकृत्या । अग्नेरायोनृतमस्य प्रभूतौ । (९) तवैप्रत्ययान्तस्याऽन्त उदात्तो गतिश्चानन्तरः प्रकृत्या युगपच्चैतदुभयं स्यात् । अन्वेतवा उ । (१०) अनिगन्तो गतिर्वप्रत्ययान्तेऽञ्चतौ परे प्रकृत्या । ये पराञ्चस्तान् । (११) वप्रत्ययान्तेऽञ्चताविगन्तावपि न्यधी प्रकृत्या । न्यङ्ङुत्तानः (१२) ईषदन्यतरस्यां

५५ हिरण्यपरिमाणं धने ।
५६ प्रथमोऽचिरोपसम्पत्तौ ।
५७ कतरकतमौ कर्मधारये ।
५८ आर्यो ब्राह्मणकुमारयोः ।
५९ राजा च ।
६० षष्ठी प्रत्येनसि ॥ ३ ॥
६१ क्ते नित्यार्थे ।
६२ ग्रामः शिल्पिनि ।
६३ राजा च प्रशंसायाम् ।
६४ आदिरुदात्तः ।
६५ सप्तमीहारिणौ धर्म्येऽहरणे ।
६६ युक्ते च ।
६७ विभाषाऽध्यक्षे ।
६८ पापं च शिल्पिनि ।

प्रकृत्या । ईषत्कडारः । (१) सुवर्ण-परिमाणवाचि पूर्वपदं वा प्रकृत्या धने । द्विसुवर्णधनम् । (२) प्रथम-शब्दो वा प्रकृत्याऽभिनवत्वे । प्रथम-वैयाकरणः । (३) एतौ कर्मधारये वा प्रकृत्या । कतरकठः । (४) आर्य शब्दः प्रकृत्या ब्राह्मणकुमारयोः परयोः. आर्यब्राह्मणः । (५) ब्राह्मण-कुमारयोः परयो वा प्रकृत्या कर्मधारये । राजब्राह्मणः । (६) षष्ठ्यन्तो राजा प्रत्येनसि परे वां प्रकृत्या । राजप्रत्येनाः । (७) क्तान्ते परे नित्यार्थे समासे पूर्वं वा प्रकृत्या । नित्यप्रहसितः । (८) वा प्रकृत्या । ग्रामनापितः । (९) शिल्पिवा-चिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या । राजनापितः । (१०) अधिकारो-ऽयम् । (११) सप्तम्यन्तं हारिवाचि च आद्युदात्तं धर्म्ये परे । मुकुटे कार्षा-पणम् । (१२) युक्तवाचिनि समासे पूर्वमाद्युदात्तम् । गोवल्लभः । (१३) अध्यक्षे उत्तरपदे पूर्वपदमा-द्युदात्तं वा । गवाध्यक्षः । (१४) पाप-शब्दस्यादिरुदात्तः शिल्पवाचिनि उत्तरपदे । पापनापितः ।

६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे।
७० अङ्गानि मैरेये।
७१ भक्ताख्यास्तदर्थेषु।
७२ गोबिडालसिंहसैन्धवेषूपमाने।
७३ अके जीविकार्थे।
७४ प्राचां क्रीडायाम्।
७५ अणि नियुक्ते।
७६ शिल्पिनि चाऽकृञः।
७७ संज्ञायां च।
७८ गोतन्तियवं पाले।
७९ णिनि।
८० उपमानं शब्दार्थप्रकृतावेव।

(१) गोत्रवाचिनि अन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च परतः पूर्वपदमाद्युदात्तं क्षेपे। भार्यासौश्रुतः। (२) मैरेये उत्तरपदे तदर्थारम्भकवाचकानि पूर्वपदानि आद्युदात्तानि। मधुमैरेयः। (३) अन्नवाचि पूर्वपदमाद्युदात्तं स्यात्तदर्थेषूत्तरपदेषु। भिक्षाकंसः। (४) गवादिपूपमानवाचिषुपूर्वपदेषु पूर्वपदमाद्युदात्तम्। धान्यगवः। (५) जीविकार्थवाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदमाद्युदात्तम्। दन्तलेखकः। (६)प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यात्। उद्दालकपुष्पभञ्जिका। (७) अणन्ते परे नियुक्तवाचिनि समासेपूर्वमाद्युदात्तम्। छत्रधारः। (८) शिल्पिवाचिनि समासेऽणन्ते परे पूर्वमाद्युदात्तं स चेदण् कृञः परो न भवति। तन्तुवायः। (९) अणन्ते उत्तरपदे पूर्वपदमाद्युदात्तं सञ्ज्ञायाम्। तन्तुवायो नाम कृमिः। (१०) एते आद्युदात्ताः स्युः पालशब्दे परे। गोपालः। (११) णिन्नन्ते उत्तरपदे पूर्वपदमाद्युदात्तम्। पुष्पहारी। (१२) उपमानवाचि पूर्वपदं णिन्यन्ते

८१ युक्तारोह्यादयश्च [1] ।
८२ दीर्घकाशतुषभ्राष्ट्रवटं जे [2] ।
८३ अन्त्यात्पूर्वं बह्वचः [3] ।
८४ ग्रामेऽनिवसन्तः [4] ।
८५ घोषादिषु च [5] ।
८६ छात्र्यादयः शालायाम् [6] ।
८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् [7] ।
८८ मालादीनां च ।
८९ अमहन्नवन्नगरेऽनुदीचाम् [9] ।
९० अर्मे चावर्णं द्व्यच्त्र्यच [10] ।
९१ न भूताधिकसञ्जीवमद्राश्मकज्जलम् [11] ।
९२ अन्तः [12] ।
९३ सर्वं गुणकार्त्स्न्ये [13] ।
९४ संज्ञायां गिरिनिकाययोः [14] ।

परे आद्युदात्तम् । उष्ट्रक्रोशी । (१) युक्तारोह्यादयः समासा आद्युदात्ताः । युक्तारोही । (२) दीर्घान्तादिपूर्वपदमाद्युदात्तं जे परे । कुटीजः । (३) बह्वचः पूर्वस्यान्त्यात्पूर्वमुदात्तं जे उत्तरपदे । (४) ग्रामे परे पूर्वपदमुदात्तं, तच्चेन्निवसद्वाचि न । मल्लग्रामः । (५) एषु पूर्वपदमाद्युदात्तम् । दाक्षिघोषः । (६) शालाशब्दे उत्तरपदे छात्र्यादय आद्युदात्ताः छात्रिशाला । (७) प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं स्यात् । इन्द्रप्रस्थः । (८) प्रस्थे परे मालादीनामादिरुदात्तः । (९) नगरे परे महन्नवन्वर्जितं पूर्वपदमाद्युदात्तं तच्चदुदीचां न । ब्रह्मनगरम् । (१०) अर्मे परे द्व्यच्त्र्यच पूर्वमवर्णान्तमाद्युदात्तम् । कुक्कुटार्मम् । (११) अर्म परे नैतान्याद्युदात्तानि । भूतार्मम् । (१२) अधिकारोऽयम् । (१३) सर्वशब्दः पूर्वपदमन्तोदात्तम् । सर्वश्वेतः । (१४) एतयोः परतः पूर्वमन्तोदात्तं संज्ञायाम् । अञ्जनागिरिः ।

९५ कुमार्यां वयसि ।
९६ उदकेऽकेवले
९७ द्विगौ क्रतौ ।
९८ सभायां नपुंसके ।
९९ पुरे प्राचाम् ।
१०० अरिष्टगौडपूर्वे च ॥५॥
१०१ न हास्तिनफलकमार्देयाः ।
१०२ कुसूलकूपकुम्भशालं बिले
१०३ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।
१०४ आचार्योपसर्जनश्चान्तेवासिनि ।
१०५ उत्तरपदवृद्धौ सर्वं च ।
१०६ बहुव्रीहौ विश्वं संज्ञायाम् ।

(१) कुमारीशब्दे परे वयसि गम्ये- पूर्वपदमन्तोदात्तम् । वृद्धकुमारी । (२) मिश्र (द्रव्यान्तरसम्पृक्त)-वाचिनि समासे उदके परे पूर्वमन्तोदात्तम् । गुडोदकम् । (३) द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तम् । गर्गत्रिरात्रः । (४) सभायां परतो नपुंसकलिङ्गे समासे पूर्वमन्तोदात्तम् । गोपालसभम् । (५) पुरशब्दे परे प्राचां देशे पूर्वपदमन्तोदात्तम् । नान्दीपुरम् । (६) पुरे परेऽरिष्टगौड- पूर्वे समासे पूर्वमन्तोदात्तम् । अरिष्टपुरम् । (७) पुरे परे नैतान्यन्तोदात्तानि । हास्तिनपुरम् । (८) एतान्यन्तो- दात्तानि बिले परे । कुसूलबिलम् । (९) दिक्शब्दा अन्तोदात्ता भवन्त्येषु । पूर्वेषुकामशमी । (१०) आचार्यो पसर्जनान्तेवासिनि परे दिक्शब्दा अन्तो- दात्ताः । पूर्वपाणिनीयाः । (११) उत्तरपदाधिकारे या वृद्धिर्विहिता तद्वत्यु- त्तरपदे परे सर्वशब्दो दिक्शब्दाश्चान्तो- दात्ताः । सर्वपाञ्चालकः । (१२) बहु- व्रीहौ विश्वशब्दः पूर्वपदभूतः सञ्ज्ञाया- मन्तोदात्तः स्यात् । विश्वकर्मणा ।

१०७ उदराश्वेषुषु[1] ।
१०८ क्षेपे[2] ।
१०९ नदी बन्धुनि[3] ।
११० निष्ठोपसर्गपूर्वमन्यतरस्याम्[4] ।
१११ उत्तरपदादिः[5] ।
११२ कर्णो वर्णलक्षणात्[6] ।
११३ सञ्ज्ञौपम्ययोश्च ।
११४ कण्ठपृष्ठग्रीवाजङ्घं च ।
११५ शृङ्गमवस्थायां च ।
११६ नञो जरमरमित्रमृताः[10] ।
११७ सोर्मनसी अलोमोषसी[11] ।
११८ क्रत्वादयश्च[12] ।
११९ आद्युदात्तं द्व्यच् छन्दसि[13] ।

(१) एषु पूर्वपदमन्तोदात्तं बहुव्रीहौ सञ्ज्ञायाम् । वृकोदरः । (२) उदराश्वेषुषु पूर्वमन्तोदात्तं बहुव्रीहौ निन्दायाम् । घटोदरः । (३) बन्धुशब्दे परे नद्यन्तं पूर्वमन्तोदात्तं बहुव्रीहौ । गार्गीबन्धुः । (४) निष्ठान्तं पूर्वं पदमन्तोदात्तं वा । प्रधौतपादः । (५) उत्तरपदाधिकार आपादान्तम् । आद्यधिकारस्तु 'प्रकृत्या भगाल'मित्यवधिकः । (६) वर्णवाचिनो लक्षणवाचिनश्च परः कर्णशब्द आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । (७) कर्ण आद्युदात्तः संज्ञायाम् । मणिकर्णः । (८) एतान्युत्तरपदानि आद्युदात्तानि सञ्ज्ञौपम्ययोर्बहुव्रीहौ । शितिकण्ठः । (९) शृङ्गशब्दोऽवस्थायां सञ्ज्ञौपम्ययोश्चाद्युदात्तो बहुव्रीहौ । उद्गतशृङ्गः । (१०) नञः परा एते आद्युदात्ता बहुव्रीहौ । अजरम् । (११) सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तम् । सुकर्माणः । (१२) सोः परे क्रत्वादय आद्युदात्ताः । सुक्रतुः । (१३) यदाद्युदात्तं द्व्यच् तत्सोरुत्तरं बहुव्रीहावाद्युदात्तम् । अधा स्वश्वाः ।

१२० वीरवीर्यौ च ॥६॥

१२१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ।

१२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।

१२३ तत्पुरुषे शालायां नपुंसके ।

१२४ कन्था च ।

१२५ आदिश्चिहणादीनाम् ।

१२६ चेलखेटकटुककाण्डं गर्हायाम् ।

१२७ चीरमुपमानम् ।

१२८ पललसूपशाकं मिश्रे ।

१२९ कूलसूदस्थलकर्षाः संज्ञायाम् ।

१३० अकर्मधारये राज्यम् ।

१३१ वर्ग्यादयश्च ।

१३२ पुत्रः पुम्भ्यः ।

(१) सोः परौ बहुव्रीहौ छन्दस्याद्युदात्तौ । सुवीरेण । (२) कूलादीन्युत्तरपदान्याद्युदात्तानि अव्ययीभावे । उपकूलम् । (३) एतान्युत्तरपदानि द्विगावाद्युदात्तानि । द्विकंसः । (४) शालशब्दान्ते तत्पुरुषे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तम् । ब्राह्मणशालम् । (५) तत्पुरुषे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तम् । सौशमिकन्थम् । (६) कन्थान्ते तत्पुरुषे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तः । चिहणकन्थम् । (७) चेलादीन्युत्तरपदान्याद्युदात्तानि । पुत्रचेलम् । (८) उपमानवाची चीरशब्द उत्तरपदमाद्युदात्तम् । वस्त्रचीरम् । (९) पललादीन्युत्तरपदान्याद्युदात्तानि मिश्रे तत्पुरुषे । घृतपललं ।(१०) एते आद्युदात्तास्तत्पुरुषे । दाक्षिकूलम् । (११) कर्मधारयवर्जिते तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । (१२) वर्ग्यादीन्युत्तरपदान्याद्युदात्तानि । अर्जुनवर्ग्यः। (१३) पुम्शब्देभ्यः परः

१३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।
१३४ चूर्णादीन्यप्राणिषष्ठ्याः ।
१३५ षट् च काण्डादीनि ।
१३६ कुण्डं वनम् ।
१३७ प्रकृत्याऽभगालम् ।
१३८ शितेर्नित्याऽबह्वज्बहुव्रीहावभसत् ।
१३९ गतिकारकोपपदात्कृत् ।
१४० उभे वनस्पत्यादिषु युगपत् ॥७॥
१४१ देवताद्वन्द्वे च ।
१४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।
१४३ अन्तः ।
१४४ थाथघञ्क्ताजबित्रकाणाम् ।
१४५ सूपमानात् क्तः ।

पुत्रशब्द आद्युदात्तस्तत्पुरुषे । दाशकिपुत्रः । (१) एभ्यः पुत्रो नाद्युदात्तः । आचार्यपुत्रः । (२) एतानि प्राणिभिन्नषष्ठ्यन्तात्पराणि आद्युदात्तानि तत्पुरुषे । मुद्गचूर्णम् । (३) अप्राणिभ्यः परा या षष्ठी तदन्तात्पराणि षट् काण्डादीनि आद्युदात्तानि स्युः । दर्भकाण्डम् । (४) कुण्डमाद्युदात्तं वनवाचिनि तत्पुरुषे । दर्भकुण्डम् । (५) भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या । कुम्भीभगालम् । (६) शितेः परं नित्याऽबह्वच्कं भसद्भिन्नं प्रकृत्या । शितिपादः । (७) गत्यादिभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे । प्रकारकः । (८) वनस्पत्यादिषु पूर्वोत्तरपदे युगपत्प्रकृत्या । (९) देवताद्वन्द्वे उभे युगपत्प्रकृत्या स्तः । इन्द्रावरुणौ । (१०) पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तं न । इन्द्राग्निभ्यां कं वृषणः। (११)अधिकारोयम् । (१२) एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः। प्रभृथस्यायोः । (१३) सो-

१४६ संज्ञायामनाचितादीनाम् ।
१४७ प्रवृद्धादीनां च ।
१४८ कारकाद्दत्तश्रुतयोरेवाऽऽशिषि ।
१४९ इत्थंभूतेन कृतमिति च ।
१५० अनो भावकर्मवचनः ।
१५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।
१५२ सप्तम्याः पुण्यम् ।
१५३ ऊनार्थकलहं तृतीयायाः ।
१५४ मिश्रं चानुपसर्गमसन्धौ ।
१५५ नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ।

रुपमानाच्च परं क्तान्तमन्तोदात्तम् । सुकृतस्य । (१) गतिकारकोपपदात् क्तान्तमन्तोदात्तमनाचितादीन्वर्जयित्वा । उपहूतः । (२) एषां क्तान्तमुत्तरपदमन्तोदात्तम् । प्रवृद्धः । (३) तत्पुरुषे सञ्ज्ञायामाशिषि कारकात्परयो दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात् । देवदत्तः । (४) इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासस्तत्र क्तान्तमुत्तरपदमन्तोदात्तं स्यात् । सुप्तप्रलपितम् । (५) कारकात्परमनप्रत्ययान्तं भाववचनं कर्मवचनं चान्तोदात्तम् । पयःपानं सुखम् । (६) कारकात्पराणि एतान्युत्तरपदान्यन्तोदात्तानि तत्पुरुषे । रथवर्त्म । (७) सप्तम्यन्तात्परं पुण्यमन्तोदात्तम् । अध्ययनपुण्यम् । (८) तृतीयान्तात्पराणि ऊनार्थानि कलहशब्दश्च एतान्युत्तरपदान्यन्तोदात्तानि स्युः । माषोनम् । (९) तृतीयान्तात्परोऽनुपसर्गो मिश्रशब्दोऽन्त उदात्तोऽसन्धौ । तिलमिश्राः । (१०) सम्पाद्याद्यर्थतद्धितान्ता नञो गुणप्रतिषेधे वर्त्तमानात्परेऽन्तोदात्ताः । कार्णवेष्ट-

१५६ यंयतोश्चाऽतदर्थे ।
१५७ अंच्कावशक्तौ ।
१५८ आंक्रोशे च ।
१५९ संज्ञायाम् ।
१६० कृत्योकेष्णुच्चार्वादयश्च ।
१६१ विंभाषा तृन्नन्नतीक्ष्ण-
शुचिषु ।
१६२ वंहुव्रीहाविदमेतत्तद्भ्यः
प्रथमपूरणयोः क्रियागणने ।
१६३ संख्यायाः स्तनः ।
१६४ विंभाषा छन्दसि ।
१६५ संज्ञांयां मित्राजिनयोः ।
१६६ व्यंवायिनोऽन्तरम् ।
१६७ मुंखं स्वाङ्गम् ।
१६८ नांव्ययादिक्शब्दगोमह-
त्स्थूलमुष्टिपृथुवत्सेभ्यः ।

किकम् । (१) ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयात्परस्यान्त उदात्तः स्यात् । अपाक्ष्या । (२) अजन्तं कान्तञ्च नञः परमन्तोदात्तमशक्तौ गम्यमानायाम् । अपचः । (३) नञः परावच्कावन्तोदात्तावाक्षेपे । अपचो जाल्मः । (४) नञः परमन्तोदात्तं सञ्ज्ञायामाक्रोशे । अदेवदत्तः । (५) नञः परे एतेऽन्तोदात्ताः स्युः । अकर्त्तव्यः । (६) नञः परे एतेऽन्तोदात्ताः स्युः । अकर्त्ता । (७) एभ्योऽनयोरन्त उदात्तः । इदम्प्रथमः । (८) सङ्ख्यायाः स्तनशब्दोऽन्त उदात्तो. बहुव्रीहौ । द्विस्तनी । (९) सङ्ख्यायाःस्तनशब्दोऽन्त उदात्तो वा छन्दसि । द्विस्तनाम् । (१०) एतयोरुत्तरपदयोरन्तउदात्तो बहुव्रीहौ सञ्ज्ञायाम् । देवमित्रः । (११) व्यवधानवाचकात्परमन्तरमन्तोदात्तम् । वस्त्रान्तरम् । (१२) स्वाङ्गं मुखमुत्तरपदमन्तोदात्तं बहुव्रीहौ । गौरमुखः । (१३) एभ्यः परो मुखशब्दोऽन्तोदात्तो न स्यात् । उच्चैर्मुखः ।

१६९ निष्ठोपमानादन्यतरस्याम् ।

१७० जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ।

१७१ वा जाते ।

१७२ नञ्सुभ्याम् ।

१७३ कपि पूर्वम् ।

१७४ ह्रस्वान्तेऽन्त्यात्पूर्वम् ।

१७५ बहोर्नञ्वदुत्तरपदभूम्नि ।

१७६ न गुणादयोऽवयवाः ।

१७७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ।

१७८ वनं समासे ।

१७९ अन्तः ।

१८० अन्तश्च ॥ ९ ॥

---

(१) निष्ठान्तादुपमानवाचिनश्च परं मुखं स्वाङ्गं वाऽन्तोदात्तं बहुव्रीहौ । प्रक्षालितमुखः । (२) जात्यादिभ्यः परं क्तान्तमन्तोदात्तं स्याद्बहुव्रीहौ, कृतादीन्वर्जयित्वा, आच्छादनवाचकात्परं न चेत् । सारङ्गजग्धः । (३) जातिकालसुखादिभ्यः परो जातशब्दो वाऽन्तोदात्तः । दन्तजातः । (४) नञ्सुभ्यामुत्तरपदमन्तोदात्तं बहुव्रीहौ । अव्रीहिः । (५) नञ्सुभ्यां परं यदुत्तरपदं तदन्तस्य समासस्य पूर्वमुदात्तं कपिपरं । अब्रह्मबन्धुकः । (६) ह्रस्वान्ते उत्तरपदे समासे वाऽन्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ । अव्रीहिकः । (७) उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् । बहुव्रीहिकः । (८) अवयववाचिनो बहोः परे गुणादयो नान्तोदात्ता बहुव्रीहौ । बहुगुणा रज्जुः । (९) प्रादेरुत्तरं ध्रुवं स्वाङ्गवाचि पर्शुवर्जितमन्तोदात्तं स्यात् । प्रपृष्ठः । (१०) समासमात्रे उपसर्गादुत्तरपदं वनमन्तोदात्तम् । तस्येदिमे प्रवणे । (११) अस्मात्परं वनमन्तोदात्तम् । अन्तर्वणो देशः । (१२) उपसर्गादन्तः शब्दोऽन्त उदात्तः ।

१८१ न निविभ्याम् ।
१८२ परेरभितो भाविमण्डलम् ।
१८३ प्रादस्वाङ्गं संज्ञायाम् ।
१८४ निरुदकादीनि च ।
१८५ अभेर्मुखम् ।
१८६ अपाच्च ।
१८७ स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च ।
१८८ अधेरुपरिस्थम् ।
१८९ अनोरप्रधानकनीयसी ।
१९० पुरुषश्चान्वादिष्टः ।
१९१ अतेरकृत्पदे ।
१९२ नेरनिधाने ।
१९३ प्रतेरंश्वादयस्तत्पुरुषे ।
१९४ उपाद्द्व्यजजिनमगौरादयः ।

पर्यन्तः। (१) निविभ्यामुत्तरोऽन्तःशब्दो नाऽन्तोदात्तः । न्यन्तः । (२) परेः परमभित उभयतो भावो यस्यास्तित्तरकूलादि मण्डलं चान्तोदात्तम्। परिकूलम् । (३) प्रादुत्तरमस्वाङ्गवाचि सञ्ज्ञायामन्तोदात्तं स्यात् । प्रगृह्यम् । (४) एतान्यन्तोदात्तानि स्युः । निरुदकम् । (५) अभेर्मुखमन्तोदात्तम् । अभिमुखम् । (६) अपान्मुखमन्तोदात्तम् । अपमुखम् । (७) अपादिमानि अन्तोदात्तानि । अपस्फिगम् । (८) अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तम् । अधिदन्तः । (९) अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम् । अनुज्येष्ठः । (१०) अतेः परोऽन्वादिष्टवाची पुरुषोऽन्तोदात्तः । अत्यङ्कुशो नागः । (११) अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः । अनुपुरुषः । (१२) निशब्दादुत्तरपदमन्तोदात्तमनिधाने । निमूलम् । (१३) प्रतेः परेंऽश्वादयोऽन्तोदात्ताः । प्रत्यंशुः । (१४) उपात्परं यत् द्व्यच्कमजिनं चान्तोदात्तं तत्पुरुषे, गौरादीन्वर्जयित्वा।

१९५ सोरवक्षेपणे ।

१९६ विभाषोत्पुच्छे ।

१९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।

१९८ सक्थं चाक्रान्तात् ।

१९९ परादिश्छन्दसि बहुलम् ।
[‘बहुव्रीहावाशङ्कागौः सादृक्ते नित्यार्थे युक्तान-द्यास्तिनकूलतीरदेवता-विभाषान निर्व्येकोन-विंशतिः’ ॥]

## तृतीयः पादः ।

१ अलुगुत्तरपदे ।

२ पञ्चम्याः स्तोकादिभ्यः ।

३ ओजःसहोम्भस्तमस्तृती-यायाः ।

४ मनसः संज्ञायाम् ।

५ आज्ञायिनि च ।

उपदेवः । (१) सोरुत्तरपदं निन्दाया-मन्तोदात्तं स्यात्तत्पुरुषे । सुप्रत्य-वसितः । (२) अच्छन्दात्परः पुच्छ-शब्दोऽन्तोदात्तो वा स्यात्तत्पुरुषे । उत्पुच्छः । (३) आभ्यां परेष्वेषु अन्तोदात्तो वा । द्विपात् । (४) सक्थशब्द उत्तरपदमन्तोदात्तं वा, स चेत् क्रशब्दान्तात्परो न । श्लक्ष्ण-सक्थः । (५) छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा । अजि-संक्थमालभेत ।

इति षष्ठाध्यायस्य द्वितीयः पादः ।

(६) अलुगधिकारः प्रागानङः, उत्तर-पदाधिकारस्त्वापादसमाप्तेः । (७) एभ्यः पञ्चम्या अलुक्स्यादुत्तरपदे । स्तोका-न्मुक्तः । (८) एभ्यस्तृतीयाया अलुक्-स्यादुत्तरपदे । ओजसाकृतम् । (९) मनसस्तृतीयाया अलुक् संज्ञायाम् । मनसागुप्तः । (१०) मनस्तृतीयाया

६ आत्मनश्च ।
७ वैयाकरणाख्यायां चतुर्थ्याः ।
८ परस्य च ।
९ हलदन्तात्सप्तम्याः संज्ञायाम् ।
१० कारनाम्नि च प्राचां हलादौ ।
११ मध्याद्गुरौ ।
१२ अमूर्धमस्तकात्स्वाङ्गादकामे ।
१३ बन्धे च विभाषा ।
१४ तत्पुरुषे कृति बहुलम् ।
१५ प्रावृट्शरत्कालदिवां जे ।
१६ विभाषा वर्षक्षरशरवरात् ।
१७ घकालतनेषु कालनाम्नः ।
१८ शयवासवासिष्वकालात् ।

अलुक् आशायिनि परतः। मनसाज्ञायी। (१) आत्मनस्तृतीयाया अलुक् स्यात्। आत्मनापञ्चमः। (२) आत्मनश्चतुर्थ्या अलुक् वैयाकरणप्रसिद्धसञ्ज्ञायाम्। आत्मनेपदम्। (३) परशब्दाच्चतुर्थ्या अलुक् पूर्वविषये। परस्मैपदम्। (४) हलन्तादन्ताच्च सप्तम्या अलुक् स्यात् संज्ञायाम्। त्वचिसारः। (५) प्राचांदेशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक्स्यात्। मुकुटे कार्षापणम्। (६) मध्यात्सप्तम्या अलुक् गुरावुत्तरपदे। मध्येगुरुः। (७) मूर्धमस्तकवर्जितात्स्वाङ्गात्सप्तम्या अलुक् अकामे उत्तरपदे। कण्ठेकालः। (८) हलदन्तात्सप्तम्या अलुक्। हस्तेबन्धः। (९) कृदन्ते उत्तरपदे सप्तम्या अलुक् स्यात्तत्पुरुषे। स्तम्बेरमः। (१०) एषां सप्तम्या अलुक् जे उत्तरपदे। प्रावृषिजः। (११) एभ्यः सप्तम्या अलुक् जे। वर्षेजः। (१२) सप्तम्या विभाषाऽलुक् स्यात्। पूर्वाह्णतरे। (१३) अकालवाचिनः सप्तम्या अलुग्वा शयादिपूत्तरपदेषु। खेशयः।

१९ नेन्सिद्धबध्नातिषु च ।
२० स्थे च भाषायाम् ॥ १० ॥
२१ षष्ठ्या आक्रोशे ।
२२ पुत्रेऽन्यतरस्याम् ।
२३ ऋतो विद्यायोनिसंबन्धेभ्यः
२४ विभाषा स्वसृपत्योः ।
२५ आनङृतो द्वन्द्वे ।
२६ देवताद्वन्द्वे च ।
२७ ईदग्नेः सोमवरुणयोः ।
२८ इद्वृद्धौ ।
२९ दिवो द्यावा ।
३० दिवसश्च पृथिव्याम् ।
३१ उषासोषसः ।
३२ मातरपितरावुदीचाम् ।

(१) इन्नादिषु सप्तम्यन्ता अलुङ्न । स्थण्डिलशायी । (२) स्थे उत्तरपदे सप्तम्या अलुङ्न भाषायाम्।समस्थः। (३) षष्ठ्या अलुक्स्यादाक्रोश गम्ये । चौरस्य कुलम् । (४)षष्ठ्याःपुत्रपरेऽलुग्वा निन्दायाम् । दासीपुत्रः । (५) विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी। (६) ऋदन्तात्षष्ठ्याअलुग्वास्वसृपत्योः परयोः । (७) विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तर पदे । मातापितरौ (८) इद्वोत्तरपदे परे आनङ् । (९) अग्नेरीकारोऽन्तादेशः स्यात्सोमवरुणयोरुत्तरपदयोः, देवताद्वन्द्वे । अग्नीषोमः । (१०) वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यात् देवताद्वन्द्वे । अग्निमारुतम् । (११) देवताद्वन्द्वे उत्तरपदे दिवोद्यावाऽऽदेशः स्यात् । द्यावाभूमी । (१२) दिवो 'दिवस्' इत्यादेशः स्यात् , चात् द्यावा, देवताद्वन्द्वे पृथिवीशब्दे उत्तरपदे । दिवस्पृथिव्या । (१३)उपस्शब्दस्योपासाऽऽदेशःस्याद्देवताद्वन्द्वे । उषासासूर्यम् । (१४) मातृशब्दस्य आरङादेशो निपात्यते उदीचां मतेन । मातरपितरौ ।

३३ पितरामातरा च च्छन्दसि।
३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु।
३५ तसिलादिष्वाकृत्वसुचः।
३६ क्यङ्मानिनोश्च।
३७ न कोपधायाः।
३८ संज्ञापूरण्योश्च।
३९ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे।
४० स्वाङ्गाच्चेतः॥ २॥
४१ जातेश्च।
४२ पुंवत्कर्मधारयजातीयदेशीयेषु।
४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः।

(१) 'पितरामातरा' इति च्छन्दसि निपात्यते। (२) तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोभावोयत्रनथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे-उत्तरपदे नतु पूरण्यां प्रियादौ च परतः। चित्रगुः। (३) तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्। पट्वितमा। (४) एतयोःपरतःपुंवत्। एतायते। (५) कोपधायाःस्त्रिया न पुंवत्। रसिकाभार्यः। (६) अनयोर्नपुंवत्। दत्ताभार्यः। (७) वृद्धिशब्देन-विहिताया वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत्। स्रौघ्नीभार्यः। (८) स्वाङ्गाच्च ईकारस्तदन्ता स्त्री न पुंवत्। सुकेशीभार्यः। (९)जातेः परो यःस्त्रीप्रत्ययस्तदन्तं न पुंवत्। शूद्राभार्यः। (१०) कर्मधारये जातीयदेशीययोश्च परतोभाषितपुंस्कात्पर-ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। (११) भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वःस्यात् घरूपकल्पप्रत्ययेषु, चेलडादिषुचोत्तरपदेषु। ब्राह्मणितरा।

४४ नेद्याः शेषस्यान्यतरस्याम्[1]।
४५ उगितश्च[2]।
४६ आन्महतः समानाधिकरण-जातीययोः[3]।
४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः[4]।
४८ त्रेस्त्रयः[5]।
४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्[6]।
५० हृदयस्य हृल्लेखयदण्लासेषु[7]।
५१ वा शोकष्यञ्रोगेषु[8]।
५२ पादस्य पदाज्यातिगोपहतेषु[9]।
५३ पद्यत्यतदर्थे[10]।
५४ हिमकाषिहतिषु च[11]।
५५ ऋचः शे[12]।
५६ वा घोषमिश्रशब्देषु[13]।

(१) अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा। ब्रह्मबन्धूतरा। (२) उगितःपरा या नदी तदन्तस्य घादिषु ह्रस्वोवा। विदुषितरा। (३) महत आकारोन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीयेचपरे। महाब्रह्मः। (४) अनयोरात्स्यात्। द्वादश। (५) त्रिशब्दस्य त्रयस्स्यात् पूर्वविषये। त्रयोदश। (६) द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे। द्विचत्वारिंशत्। (७) हृदयस्य हृदादेशो-लेखादिपूत्तरपदेषु। हृल्लेखः। (८) हृदयस्य हृदादशो वा स्याच्छोकादि-पूत्तरपदेषु। हृच्छोकः। (९) एषु उत्तरपदेषु पादस्य पदइत्यदन्त आदेश-स्यात्। पदाजिः। (१०) पादस्य-पत्स्यादतदर्थे यति परे। पद्याः। (११) हि-मादिपूत्तरपदेषु पादस्य पदादेशः स्यात्। पद्धिमम्। (१२) ऋचः पादस्य पत्स्याच्छे परे। पच्छः। (१३) एषु परतः पादस्य पद्वा। पद्घोषः।

५७ उदकस्योदः संज्ञायाम् ।
५८ पेषं वासवाहनधिषु च ।
५९ एकहलादौ पूरयितव्ये- ऽन्यतरस्याम् ।
६० मन्थौदनसक्तुबिन्दुवज्र- भारहारवीवधगाहेषु च ।
६१ इको ह्रस्वोऽङ्यो गालवस्य ।
६२ एकतद्धिते च ।
६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ।
६४ त्वे च ।
६५ इष्टकेषीकामालानां चिततूलभारिषु ।
६६ खित्यनव्ययस्य ।
६७ अरुर्द्विषदजन्तस्य मुम् ।
६८ इच एकाचोऽम्प्रत्ययवच्च ।
६९ वाचंयमपुरन्दरौ च ।

(१) उदकस्योदेत्ययमादेशः सञ्ज्ञायामुत्तरपदे । उदमेघः । (२) उदकस्योदादेशः पेषमादिपूत्तरपदेषु । उदपेषं पिनष्टि । (३) उदकस्योदादेशः स्यात्पूरयितव्ये एकहलादावुत्तरपदे । उदकुम्भः । (४) उदकस्योदादेशो मन्थादिपूत्तरपदेषु । उदमन्थः । (५) इगन्तस्याङ्गस्य ह्रस्वो वा स्यादुत्तरपदे परे । ग्रामणिपुत्रः । (६) एकशब्दस्य ह्रस्वः स्यात्तद्धित उत्तरपदे च । एकरूप्यम् । (७) ङ्यन्तस्याबन्तस्य ह्रस्वः स्यात्सञ्ज्ञाछन्दसोः । रेवतिपुत्रः । (८) त्वप्रत्यये ङ्यापो वा ह्रस्वः । अजत्वम् । (९) इष्टकादीनां तदन्तानाञ्च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः । इष्टकचितम् । (१०) खिदन्तेपरेपूर्वपदस्य ह्रस्वः स्यात् । मुनिन्धयः । (११) अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते उत्तरपदेनत्वव्ययस्य । जनमेजयः । (१२) इजन्तादेकाचोऽम्स्यात् स च स्वाद्यम्वत् खिदन्ते परे । गाम्मन्यः । (१३) पतौ

७० कारे[1] सत्यागदस्य ।

७१ श्येनातिलस्य[2] पाते ञे ।

७२ रात्रेः[3] कृति विभाषा ।

७३ नलोपो[4] नञः ।

७४ तस्मान्नुडचि[5] ।

७५ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु[6] प्रकृत्या ।

७६ एकादिश्चैकस्य[7] चादुक् ।

७७ नगोऽप्राणिष्वन्यतरस्याम्[8] ।

७८ सहस्य[9] सः संज्ञायाम् ।

७९ ग्रन्थान्ताधिके[10] च ।

८० द्वितीये[11] चानुपाख्ये ॥ ४ ॥

८१ अव्ययीभावे[12] चाकाले ।

८२ वोपसर्जनस्य[13] ।

८३ प्रकृत्याशिषि[14] ।

निपात्यते । वाचंयमः । (१) कारशब्दे उत्तरपदेऽनयोर्मुम् स्यात् । अगदङ्कारः । (२) श्येनतिल एतयोः मुमागमः स्याञ्ञप्रत्यये परे पातशब्दे उत्तरपदे । श्यैनंपाता । (३) रात्रेः कृति वा मुम् । (४) नञो नस्य लोपः स्यादुत्तपदे । अब्राह्मणः । (५) लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । (६) एषु नञ्प्रकृत्या स्यात् । नभ्राट् । (७) एकादिर्नञ्प्रकृत्या स्यादेकस्य चाऽदुगागमः । एकान्नविंशतिः । (८) नग इत्यत्र नञ्प्रकृत्या स्यात् । नगाः । (९) सहशब्दस्य स आदेशः स्यात् उत्तरपदे संज्ञायाम् । सपलाशम् । (१०) अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तम् । (११) अनुमेयेद्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । (१२) सहस्य सः स्यादव्ययीभावे न तु काले । सचक्रम् । (१३) बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । सपुत्रः । (१४) सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सपुत्राय ।

८४ समानस्य च्छन्दस्यमूर्ध-प्रभृत्युदर्केषु ।
८५ ज्योतिर्जनपदरात्रिनाभि-नामगोत्ररूपस्थानवर्ण-वयोवचनबन्धुषु ।
८६ चरणे ब्रह्मचारिणि ।
८७ तीर्थे ये
८८ विभाषोदरे ।
८९ दृग्दृशवतुषु ।
९० इदंकिमोरीश्की ।
९१ आ सर्वनाम्नः ।
९२ विष्वग्देवयोश्च टेरद्र्य-ञ्चतावप्रत्यये ।
९३ समः समि ।
९४ तिरसस्तिर्यलोपे ।
९५ सहस्य सध्रिः ।
९६ सधमादस्थयोश्छन्दसि ।
९७ अन्तरुपसर्गेभ्योऽप ईत् ।

(१) समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । सगर्भ्यः । (२) एषु द्वादशसूत्तरपदेषु समानस्यः सः स्यात् । सज्योतिः । (३) ब्रह्मचारिण्युपपदे समानस्य सः स्यात् । सब्रह्मचारी । (४) तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः । (५) यादौप्रत्ययेविवक्षिते वा सहस्य सः स्यात् । सोदर्यः । (६) एषु समानस्य सः स्यात् । सदृक् । (७) दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । (८) सर्वनाम्न आकारोऽन्तादेशःस्यात् दृग्दृशवतुषु । तादृक् । (९) अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्तेऽञ्चतौ परे । अमुमुयङ् । (१०) समः सम्यादेशो वप्रत्ययान्तेऽञ्चतौ परे । सम्यङ् । (११) अलुप्ताकारेऽञ्चतावप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । (१२) वप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् । (१३) सहस्य सधादेशो माद-स्थयोरुत्तरपदयोश्छन्दसि । सधमा द्युम्नः । (१४) एभ्योऽपस्य

९८ ऊदनोर्देशे ।

९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ।

१०० अर्थे विभाषा ॥ ५ ॥

१०१ कोः कत्तत्पुरुषेऽचि ।

१०२ रथवदयोश्च ।

१०३ तृणे च जातौ ।

१०४ का पथ्यक्षयोः ।

१०५ ईषदर्थे ।

१०६ विभाषा पुरुषे ।

१०७ कवं चोष्णे ।

१०८ पथि च च्छन्दसि ।

१०९ पृषोदरादीनि यथोपदिष्टम् ।

११० संख्याविसायपूर्वस्याऽह्नस्याहनन्यतरस्यां ङौ ।

१११ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।

ईःस्यात् । द्वीपम् । (१) अनोःपरस्यापस्य ऊत्स्याद्देशे । अनूपः । (२) अन्यशब्दस्य दुगागमःस्यादाशीरादिपुपरेपु । अन्यदाशा । (३) अर्थशब्दे उत्तरपदेऽन्यस्यदुगागमो वा स्यात् । अन्यदर्थः । (४) अजादावुत्तरपदे कोः कत्तत्पुरुषे । कदश्वः । (५) कोः कदादेशो रथवदयोः । कद्रथः । (६) कोः कत्स्यात्तृणेजातौ । कत्तृणम् । (७) कोः काऽऽदेशः पथ्यक्षयोः । कापथम् । (८) कोः कादेशः स्यादीषदर्थे । काजलम् । (९) कोः कादेशो वा स्यात्पुरुषे । कापुरुषः। (१०) उष्णशब्दे उत्तरपदे कोःकवं का च वास्यात् । कोष्णम् । (११) कोः कवं कात्र वा स्यात्पथिशब्दे उत्तरपदे च्छन्दसि । कवपथः । (१२) पृषोदरप्रकाराणि शिष्टैर्यथोचारितानि तथैव साधूनि स्युः । (१३) सङ्ख्यादिपूर्वस्याऽह्नस्याहनादेशो वास्यान्ङौ । द्व्यह्नि । (१४) ढरेफयो-

११२ सहिवहोरोदवर्णस्य ।
११३ साढ्यै साढ्वा साढेति निगमे ।
११४ संहितायाम् ।
११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ।
११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।
११७ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् ।
११८ वले ।
११९ मतौ बह्वचोऽनजिरादीनाम् ।
१२० शरादीनां च ॥ ६ ॥
१२१ इको वहेऽपीलोः ।
१२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ।
१२३ इकः काशे ।
१२४ दस्ति ।

लोपनिमित्तयोः पूर्वस्याऽणो दीर्घः । लीढः । (१) अनयोरवर्णस्य ओत्स्याद्ढलोपे सति । सोढा । (२) सहेः क्त्वाप्रत्यये आद्यद्वयं तृनि तृतीयं निपात्यते । (३) अधिकारोयम् । (४) कर्णशब्दे परे लक्षणवाचकस्य दीर्घः । द्विगुणाकर्णः । (५) क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः । उपानत् । (६) कोटरादीनां वने परे किंशुलकादीनां गिरौ परे दीर्घः स्यात् । पुरगावणम् । (७) वलप्रत्यये परे दीर्घः स्यात् संज्ञायाम् । कृषीवलः । (८) मतौ परे बह्वचोऽजिरादिवर्जितस्य दीर्घः सञ्ज्ञायाम् । अमरावती । (९) शरादीनां मतौ दीर्घः सञ्ज्ञायाम् । शरावती । (१०) इगन्तस्य दीर्घः स्याद्वहौ । ऋषीवहम् । (११) उपसर्गस्य बहुलं दीर्घःस्याद्घञन्ते परे नतु मनुष्ये। परीपाकः । (१२) इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । (१३) इगन्तोपगस्य दीर्घः स्यादादेशो यस्त-

१२५ अष्टनः संज्ञायाम् ।

१२६ छन्दसि च ।

१२७ चितेः कपि ।

१२८ विश्वस्य वसुराटोः ।

१२९ नरे संज्ञायाम् ।

१३० मित्रे चर्षौ ।

१३१ मन्त्रे सोमाश्वेन्द्रियवैश्वदेव्यस्य मतौ ।

१३२ ओषधेश्च विभक्तावप्रथमायाम् ।

१३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।

१३४ इकः सुञि ।

१३५ द्व्यचोऽतस्तिङः ।

१३६ निपातस्य च ।

१३७ अन्येषामपि दृश्यते ।

१३८ चौ ।

कारस्तदादावुत्तरपदे । नीतम् । (१) उत्तरपदे दीर्घः । अष्टापदम् । (२) अष्टनो दीर्घःस्यादुत्तरपदे सञ्ज्ञायाम् । अष्टावक्रः । (३) चितेः दीर्घःस्यात्कपि परतः । एकचितीकः । (४) विश्वशब्दस्य दीर्घोन्तादेशः स्यादसौ राट्शब्देच परे । विश्वारा । (५) नरशब्दे उत्तरपदे विश्वशब्दस्य दीर्घः स्यात्सञ्ज्ञायाम् । विश्वानरः । (६) मित्रे चोत्तरपदे विश्वस्य दीर्घः स्यादृषौ । विश्वामित्रः ।

(७) दीर्घःस्यान्मन्त्र । सोमवतीम् । (८) दीर्घः स्यान्मन्त्रे । यदोषधीभ्यः । (९) दीर्घःस्यात् । आतू न इन्द्र । (१०) इको दीर्घःस्यात्सुञिपरे मन्त्रे । अभीषुणः । (११) मन्त्रे दीर्घः । विद्मा हि चक्रा । (१२) निपातस्य ऋचि दीर्घः । एवा ते । (१३) कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच्स्यात्समासान्तः । केशाकेशि । (१४) लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणोदीर्घः स्यात् । प्राचः ।

१३९ सम्प्रसारणस्य ।

['अलुक् षष्ठ्या जातेरिको-ऽव्ययीभावे कोः कत्तद्विको वद्धे एकोनविंशतिः']

## अथ चतुर्थः पादः ।

१ अङ्गस्य ।
२ हलः ।
३ नामि ।
४ न तिसृचतसृ ।
५ छन्दस्युभयथा ।
६ नृ च ।
७ नोपधायाः ।
८ सर्वनामस्थाने चासम्बुद्धौ ।
९ वा षपूर्वस्य निगमे ।
१० सान्तमहतः संयोगस्य ।
११ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ।

(१) सम्प्रसारणस्य दीर्घःस्यादुत्तरपदे । कौमुदगन्धीपुत्रः ।

इति षष्ठाध्यायस्य तृतीयपादः ।

(२) अधिकारोऽयम् । (३) अङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् । जिनाति । (४) अजन्ताङ्गस्य दीर्घः स्यान्नामि । रामाणाम् । (५) एतयोर्नामि दीर्घो न स्यात् । तिसृणाम् । (६) छन्दसि नामि दीर्घो वा । धातृणाम् । (७) 'नृ' इत्येतस्य नामि वा दीर्घःस्यात् । नृणाम् । (८) नान्तस्योपधाया दीर्घःस्यान्नामि । पञ्चानाम् । (९) नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे । सखा । (१०) षपूर्वस्या च उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे । ऋभुक्षाणम् । (११) सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने । अजरांसि । (१२) अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनाम-स्थाने । क्रोष्टा ।

१२ इन्हन्पूषार्यम्णां शौ ।
१३ सौ च ।
१४ अत्वसन्तस्य चाऽधातोः ।
१५ अनुनासिकस्य क्विझलोः क्ङिति ।
१६ अज्झनगमां सनि ।
१७ तनोतेर्विभाषा ।
१८ क्रमश्च क्त्वि ।
१९ च्छ्वोः शूडनुनासिके च ।
२० ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।
२१ राल्लोपः ।
२२ असिद्धवदत्राभात् ।
२३ श्नान्नलोपः ।

(१) एषां शावेवोपधाया दीर्घो नान्यत्र । बहुदण्डीनि । (२) इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ । वृत्रहा । (३) अत्वन्तस्योपधाया-दीर्घो धातुभिन्नाऽसन्तस्य चाऽसम्बुद्धौ सौ परे। धीमान् । (४) अनुनासिकान्तस्योपधाया दीर्घःस्यात् क्वौ झलादौ क्ङिति च । इदामति । (५) अजन्तानां हन्तेरजादेशगमेश्च दीर्घःस्याज्झलादौ सनि। जिगीषति । (६) तनोतेरुपाधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति । (७) क्रम उपधाया वा दीर्घः स्याज्झलादौ क्त्वपरे । क्रान्त्वा । (८) सतुक्कस्य छस्य वस्य च क्रमात् 'श्' 'ऊठ्' 'इत्येतावादेशौ-स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। स्योनाति । (९) ज्वरादीनामुपधाव-कारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये । मामोति । (१०) रेफात्परयोश्छ्वोर्लोपःस्यात् । तोतोर्त्ति । (११) इत ऊर्ध्वमापादपरिसमाप्तेराभीयं, समानाश्रये आभीये कर्त्तव्ये-आभीयमसिद्धं स्यात् । एधि । (१२) श्नमः परस्य नस्य लोपः स्यात् । इन्द्धे ।

२४ अनिदितां हल उपधायाः क्ङिति।
२५ दंशसञ्जस्वञ्जां शपि।
२६ रञ्जेश्च।
२७ घञि च भावकरणयोः।
२८ स्यदो जवे।
२९ अवोदैधौद्मप्रश्रथहिमश्रथाः।
३० नाञ्चेः पूजायाम्।
३१ क्त्वि स्कन्दिस्यन्दोः।
३२ जान्तनशां विभाषा।
३३ भञ्जेश्च चिणि।
३४ शास इदङ्हलोः।
३५ शा हौ।
३६ हन्तेर्जः।
३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।
३८ वा ल्यपि।

(१) हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च। प्राङ्। (२) एषां शपि नलोपः स्यात्। स्वजते। (३) शपि न लोपः। रजति। (४) रञ्जेर्नलोपः स्याद्भावकरणवाचिनि घञि परतः। रागः। (५) स्यन्दे घञि नलोपो वृद्ध्यभावश्च निपात्येते। स्यदः। (६) घञि नलोपो निपात्यते। अवोदः। (७) पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात्। प्राङ्। (८) एतयोर्नलोपो न स्यात्क्त्वपरे। स्कन्त्वा। (९) जान्तानां नशेश्च नलोपो वा स्यात् क्त्वपरे। भक्त्वा। (१०) नलोपो वा स्यात्। अभाजि। (११) शासउपधाया इत्स्यादङि हलादौ क्ङिति। शिष्टः। (१२) शास्तेःशादेशः स्याद्धौ परे। शाधि। (१३) हन्तेर्जादेशः स्याद्धौ परे। जहि। (१४) अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङितिपरे। हतः। (१५) अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा

३९ नं क्तिचि दीर्घश्च ।
४० गमः क्वौ ।
४१ विड्वनोरनुनासिकस्यात् ।
४२ जनसनखनां सञ्झलोः ।
४३ ये विभाषा ।
४४ तनोतेर्यकि ।
४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।

स्याल्ल्यपि । आगत्य । (१) अनिटां वनतितनोत्यादीनाञ्च दीर्घानुनासिकलोपौ न स्तःक्तिचि परे । यन्तिः । (२) गमः कावनुनासिकलोपः स्यात् । अङ्गगत् । (३) विड्वनोरनुनासिकस्य आत्स्यात् । विजावा । (४) एषामाकारोऽन्तादेशःस्याज्झलादौ सनि झलादौ क्ङिति च । जजातः । (५) जनसनखनामात्वं वा स्याद्यौ । सायात् । (६) आकारोऽन्तादेशो वा स्यात् । तायते । (७) सनोतेः क्तिचि आत्वं वा स्याल्लोपश्च वा । सातिः।

४६ आर्धधातुके ।
४७ भ्रस्जो रोपधयो रमन्यतरस्याम् ।
४८ अतो लोपः ।
४९ यस्य हलः ।
५० क्यस्य विभाषा ।
५१ णेरनिटि ।
५२ निष्ठायां सेटि ।

सतिः । (८) अधिकारोऽयम् । (९) भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । भ्रष्टा । भर्ष्टा । (१०) आर्द्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे । गोपायाञ्चकार । (११) हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके । सोसूचाञ्चक्रे । (१२) हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके । समिधिता । (१३) अनिडादावार्धधातुके परे णेर्लोपः स्यात् । अचीकमत । (१४) णेर्लोपः

५३ जनिता मन्त्रे ।
५४ शमिता यज्ञे ।
५५ अयामन्ताल्वाय्येत्न्विष्णुषु ।
५६ ल्यपि लघुपूर्वात् ।
५७ विभाषाऽऽपः ।
५८ युप्लुवोर्दीर्घश्छन्दसि ।
५९ क्षियः ।
६० निष्ठायामण्यदर्थे ।
६१ वाऽऽक्रोशदैन्ययोः ।
६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।
६३ दीङो युडचि क्ङिति ।
६४ आतो लोप इटि च ।
६५ ईद्यति ।

स्यात्सेण्निष्ठायाम् । भावितः । (१) इडादौ तृचि णिलोपो निपात्यते । यो नः पिता जनिता । (२) यज्ञे इडादौ तृचि नलोपो निपात्यते । शमिता । (३) आम अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । (४) लघुपूर्वात्परस्य णेरयादेशः स्याल्ल्यपि । विगणय्य । (५) आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य । (६) ल्यपि परतो युप्लुवोर्दीर्घश्छन्दसि । वियूय । (७) क्षियो ल्यपि दीर्घः स्यात् । प्रक्षीय । (८) ण्यदर्थो भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियोदीर्घः स्यात् । क्षीणवान् । (९) क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च । क्षीणायुर्भव । (१०) उपदेशे योऽच् तदन्तानां, हनादीनाञ्च चिणीवाऽङ्गकार्यं स्यात्स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च । भाविता । (११) दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् । दिदीये । (१२) अजाद्योरार्धधातुकयोः क्ङिदिटोः परत आतो लोपः स्यात् । दधतुः । (१३) यति परे आत ईत्स्यात् । देयम् ।

६६ घुमास्थागापाजहातिसां हलि ।
६७ एर्लिङि ।
६८ वाऽन्यस्य संयोगादेः ।
६९ न ल्यपि ।
७० मयतेरिदन्यतरस्याम् ।
७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः ।
७२ आडजादीनाम् ।
७३ छन्दस्यपि दृश्यते ।
७४ न माङ्योगे ।
७५ बहुलं छन्दस्यमाङ्योगेऽपि ।
७६ इरयो रे ।
७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।
७८ अभ्यासस्याऽसवर्णे ।
७९ स्त्रियाः ।

(१) एषामीत्स्य हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट । (२) घुसञ्ज्ञकानां मास्थादीनाञ्च एत्वं स्यादार्धधातुके किति लिङि । धेयात् । (३) घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लायात् । (४) ल्यपि परे घुमास्थादेरीत्वं न । प्रधाय । (५) मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि । अपमित्य याचते । (६) एषु अङ्गस्य अडागमः स्यात् । अभवत् । (७) अजादीनामाट् स्याल्लुङादिषु । आतत् । (८) अनजादीनामपि छन्दसि आट् दृश्यते । आनट् । (९) माङ्योगे अडाटौ न स्तः । मा भवान् भूत् । (१०) अमाङ्योगेऽपि अडाटौ न स्तः, माङ्योगेऽपि स्तश्छन्दसि । जनिष्ठा उग्रः । (११) 'इरे' इत्यस्य 'रे' आदेशः स्याच्छन्दसि । प्रथमं दध्र आपः । (१२) श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य इयङुवङौ स्तोऽजादौ प्रत्यये परे । नियौ । (१३) अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय । (१४) स्त्रा-

८० वाऽम्शसोः।[1]
८१ इणो यण्।[2]
८२ एरनेकाचोऽसंयोगपूर्वस्य।[3]
८३ ओः सुपि।[4]
८४ वर्षाभ्वश्च।[5]
८५ न भूसुधियोः।[6]
८६ छन्दस्युभयथा।[7]
८७ हुश्नुवोः सार्वधातुके।[8]
८८ भुवो वुग्लुङ्लिटोः।[9]
८९ ऊदुपधाया गोहः।[10]
९० दोषो णौ।[11]
९१ वा चित्तविरागे।[12]
९२ मितां ह्रस्वः।[13]

शब्दस्य इयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। (१) अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्-स्त्रीम्। (२) इणो यण्स्यादजादौ प्रत्यये परे। यन्ति। (३) धात्ववयवसंयोग पूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। प्रध्यौ। (४) धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण्स्यादजादौ सुपि। खलप्वौ। (५) अस्योवर्णस्य यण्स्यादचि सुपि। वर्षाभ्वौ। (६) एतयो यण्न स्यादचि सुपि। सुधियौ। (७) भूसुधियोर्यण् स्यादियङुवङौ च। वनेषु चित्र विभ्वम्। (८) जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चाऽसंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके। शृण्वन्ति। (९) भुवो वुगागमः स्याल्लुङ्लिटोरचि। बभूव। (१०) गुह उपधाया ऊत्स्याद्गुणहेतावजादौ प्रत्यये। गूहति। (११) दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति। (१२) दुष्यतेरुपधाया ऊत्स्याद्वा णौ चित्तविकारे। चित्तं दूषयति दोषयति वा कामः। (१३) मितामुपधाया ह्रस्वः

९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम्।
९४ खचि ह्रस्वः।
९५ ह्लादो निष्ठायाम्।
९६ छादेर्घेऽद्व्युपसर्गस्य।
९७ इस्मन्त्रन्क्विषु च।
९८ गमहनजनखनघसां लोपः क्ङित्यनङि।
९९ तनिपत्योश्छन्दसि।
१०० घसिभसोर्हलि च।
१०१ हुझल्भ्यो हेर्धिः।
१०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि।
१०३ अङितश्च।
१०४ चिणो लुक्।
१०५ अतो हेः।
१०६ उतश्च प्रत्ययादसंयोगपूर्वात्।
१०७ लोपश्चास्यान्यतरस्यां म्वोः।

स्याण्णौ परे। ज्ञपयति। (१) चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्। शामिता। (२) खच्परे णावुपधाया ह्रस्वः स्यात्। द्विषन्तपः। (३) ह्लादो निष्ठायां ह्रस्वः स्यात्। प्रह्लन्नः। (४) द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद्घे परे। दन्तच्छदः। (५) एषु छादेर्ह्रस्वः स्यात्। तनुच्छत्। (६) एषामुपधाया लोपः स्यादजादौ च क्ङिति नत्वङि। चख्नतुः। (७) एनयोरुपधाया लोपः क्ङिति परे। वितत्निरे कवयः। (८) अनयोरुपधाया लोपः स्याद्धलादावजादौ च क्ङिति। सग्धिश्च मे। (९) होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। (१०) एभ्यो हेर्धिः स्याच्छन्दसि। (११) अङितश्च हेर्धिः स्यात्। रारन्धि। (१२) चिणः परस्य लुक् स्यात्। अप्यायि। (१३) अतः परस्य हेर्लुक् स्यात्। भव। (१४) छन्दसि ह्विरपिद्धा। (१५) संयोगपूर्वो यः प्रत्ययोकारस्तदन्त-

१०८ नित्यं करोतेः [1]।
१०९ ये च [2]।
११० अत उत्सार्वधातुके [3]।
१११ श्नसोरल्लोपः [4]।
११२ श्नाभ्यस्तयोरातः [5]।
११३ ई हल्यघोः [6]।
११४ इद्दरिद्रस्य [7]।
११५ भियोऽन्यतरस्याम् [8]।
११६ जहातेश्च [9]।
११७ आ च हौ [10]।
११८ लोपो यि [11]।
११९ घ्वसोरेद्धावभ्यासलोपश्च [12]।
१२० अत एकहल्मध्येऽनादेशादेर्लिटि [13]।

स्याङ्गस्य लोपो वास्यान्म्वोः परयोः। धिन्वः। (१) करोतेः प्रत्ययोकारस्य नित्यं लोपःस्यान्म्वोः परयोः। कुर्वः। (२) कृञ उलोपः स्याद्यादौ प्रत्यये परे। कुर्यात्। (३) उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति। कुरुतः। (४) श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः। (५) अनयोरातो लोपः स्यात्क्ङिति सार्वधातुके। दरिद्रति। (६) श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङितिहलि तु घुमन्श्नकस्य। मिमीते। (७) दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः। (८) भिय इकारःस्याद्धलादौ क्ङितिसार्वधातुके। बिभितः। (९) इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। जहितः। (१०) जहातेर्हौ परे आस्याच्चादिदीतौ। जहाहि। (११) जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। (१२) घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च। एधि। (१३) लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्याऽसंयुक्तहल्मध्यस्थाकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि। देवे।

१२१ थलि च सेटि।
१२२ तॄफलभजत्रपश्च।
१२३ राधो हिंसायाम्।
१२४ वा जॄभ्रमुत्रसाम्।
१२५ फणां च सप्तानाम्।
१२६ न शसददवादिगुणानाम्।
१२७ अर्वणस्त्रसावनञः।
१२८ मघवा बहुलम्।
१२९ भस्य।
१३० पादः पत्।
१३१ वसोः सम्प्रसारणम्।
१३२ वाह ऊठ्।
१३३ श्वयुवमघोनामतद्धिते।
१३४ अल्लोपोऽनः।

(१) प्रागुक्तं स्यात्। पेचिथ। (२) एषामत एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलिच। त्रेपे। (३) एत्वाभ्यासलोपौ स्तः कितिलिटि सेटि थलिच। अपरेधतुः। (४) एषामेत्वाभ्यासलोपौ वास्तः। भ्रेमतुः। (५) एषां वा एत्वाभ्यास-लोपौ स्तः किति लिटि सेटि थलिच। फेणतुः। (६) शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च पोऽकारस्तस्य एत्वाभ्यासलोपौ न। दददे। (७) नञा रहितस्यार्वन्नन्तस्याङ्गस्य 'तृ' इत्य-न्तादेशः स्यान्नतु सौ। अर्वन्तौ।

(८) मघवन्छब्दस्य वा तृ इत्यन्ता-देशः स्यात्। मघवान्। ९ अधिकारोऽयम्। (१०) पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदा-देशः स्यात्। सुपदः। (११) वस्व-न्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। (१२) भस्यवाहः सम्प्रसारणमूठ् स्यात्। विश्वौहः। (१३) अन्नन्तानां भसञ्ज्ञ-कानामेषामतद्धिते परे सम्प्रसारणं स्यात्। मघोनः। (१४) अङ्गावयवोऽसर्व-नामस्थानयजादिस्वादिपरो योऽन् तस्या-कारस्यलोपः स्यात्। यूष्णः।

१३५ षपूर्वहन्धृतराज्ञामणि ।
१३६ विभाषा ङिश्योः ।
१३७ न संयोगाद्वमन्तात् ।
१३८ अचः ।
१३९ उद ईत् ।
१४० आतो धातोः ।
१४१ मन्त्रेष्वाङ्यादेरात्मनः ।
१४२ ति विंशतेर्डिति ।
१४३ टेः ।
१४४ नस्तद्धिते ।
१४५ अह्नष्टखोरेव ।
१४६ ओर्गुणः ।
१४७ ढे लोपोऽकद्र्वाः ।
१४८ यस्येति च ।

(१) षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि । औक्ष्णः । (२) अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरोयोऽन् तस्याकारस्य लोपो वा स्यान्ङिश्योः परयोः । यूष्णि : (३) वकारमकारान्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात् । यज्वनः । (४) लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् । प्राचः । (५) उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ई स्यात् । उदीचः । (६) आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपःस्यात् । विश्वपः । (७) आत्मञ्छब्दस्यादेर्लोपः स्यादाङि । त्मना देवेषु । (८) विंशतेर्भस्य तिशब्दस्य लोपःस्याड्डिति परे । आसन्नविंशाः । (९) डिति भस्य टेर्लोपःस्यात् । कतरत् ।(१०) नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते । उपराजम् । (११) अह्नष्टखोरेव टिलोपो नान्यत्र । उत्तमाहः । (१२) उवर्णान्तस्य भस्य गुणःस्यात्तद्धिते । बाहुबाहवि । (१३) कद्रूभिन्नस्य उवर्णान्तस्य भस्य लोपः स्याड्ढे परे । कामण्डलेयः । (१४) भस्येवर्णावर्णयोर्लोपः स्यादिकारेतद्धि-

१४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।
१५० हलस्तद्धितस्य ।
१५१ आपत्यस्य च तद्धितेऽनाति ।
१५२ क्यच्व्योश्च ।
१५३ बिल्वकादिभ्यश्छस्य लुक्
१५४ तुरिष्ठेमेयःसु ।
१५५ टेः ।
१५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।
१५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।
१५८ बहोर्लोपो भू च बहोः ।
१५९ इष्ठस्य यिट् च ।
१६० ज्यादादीयसः ।

ते च परे । दाक्षिः । (१) अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । मत्सी । (२) हलउत्तरस्य तद्धितयकारस्योपधाभूतस्य लोपःस्यादीति परे । गार्गी । (३) हलःपरस्यापत्ययकारस्य लोपःस्यात्तद्धिते परे नत्वाकारे । गार्गीयाः । (४) हलःपरस्यापत्ययकारस्य लोपःस्यात्क्ये च्वौ च परतः । गार्गीभवति । (५) बिल्वकादिभ्यश्छस्य लुक्स्यात्तद्धिते परे । बैल्वकाः । (६) तृशब्दस्य लोपःस्यादिष्ठेमेयस्सुपरेपु । करिष्ठः । (७) भस्य टेर्लोपःस्यादिष्ठेमेयस्सु । प्रथिमा । (८) एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिपु । स्थविष्ठः । (९) प्रियादीनां क्रमात् प्रादयः स्युरिष्ठादिपु । प्रेष्ठः । (१०) बहोःपरयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । (११) बहोः परस्य इष्ठस्य लोपः स्यात्यिडागमश्च । भूयिष्ठः । (१२) ज्यादुत्तरस्य इयसुन

१६१ र[1] ऋतो हलादेर्लघोः ।
१६२ विभाषर्जोश्छन्दसि[2] ।
१६३ प्रकृत्यैकाच्[3] ।
१६४ इनण्यनपत्ये[4] ।
१६५ गाथिविदथिकेशिगणि-पणिनश्च[5] ।
१६६ संयोगादिश्च[6] ।
१६७ अन्[7] ।
१६८ ये चाभावकर्मणोः[8] ।
१६९ आत्माध्वानौ खे[9] ।
१७० न मपूर्वोऽपत्येऽवर्मणः[10] ।
१७१ ब्राह्मोऽजातौ[11] ।
१७२ कार्मस्ताच्छील्ये[12] ।
१७३ औक्षमनपत्ये[13] ।
१७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि[14] ।

आकारादेशः स्यात् । ज्यायान् ।
(१) हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु । प्रथिमा । (२) ऋजुशब्दस्य ऋतःस्थाने रःस्याद्वा इष्ठेमेयस्सु छन्दसि । खं रजिष्ठम् । (३) इष्ठादिषु एकाच्प्रकृत्या स्यात् । श्रेष्ठः । (४)अनपत्यार्थेऽणिपरे इन्प्रकृत्या स्यात् । गाथिनम् । (५) एतेऽणि प्रकृत्या स्युः । पाणिनिः । (६) संयोगादिश्च इन् प्रकृत्या स्यादणि परे । चाक्रिणः । (७) अणि अन् प्रकृत्यास्यात् । राजनः। (८) यादौ तद्धितपरेऽन् प्रकृत्या स्यान्नतु भावकर्मणोः। राजन्यः । (९) एतौ खे प्रकृत्या स्तः । आत्मनीनम् । (१०) मपूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि । भाद्रमासः । (११) योगोविभज्यते । ब्राह्म इति निपात्यतेऽणि । ब्राह्मंहविः । अपत्येजातावणि टिलोपो न स्यात् । ब्राह्मणः । (१२) कार्म इति ताच्छील्ये णे टिलोपो निपात्यते । कार्मः। (१३) अणि टिलोपो निपात्यते । औक्षंपदम् । (१४) एतानि निपात्यन्ते

१७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि । ['अङ्गस्यराल्लोपो विड्वनोर्वा क्रोशेणो यण् हुझल्भ्यस्थलि च मन्त्रेषु र ऋतः पञ्चदश']

इति षष्ठाध्यायस्य चतुर्थः पादः ।

# अथ सप्तमोऽध्यायः ।

## प्रथमः पादः ।

१ युवोरनाकौ ।
२ आयनेयीनीयियःफढखछघां प्रत्ययादीनाम्
३ झोऽन्तः ।
४ अदभ्यस्तात् ।
५ आत्मनेपदेष्वनतः ।
६ शीङो रुट् ।
७ वेत्तेर्विभाषा ।
८ बहुलं छन्दसि ।

दाण्डिनायनाः । (१) ऋतुशब्दाद्यति वास्तुशब्दादणि यति च यणादेशो निपात्यते । ऋत्व्यम्

इति षष्ठाध्यायस्य चतुर्थः पादः ।

(२) युवु एतयोरनाकौ स्तः । औक्षकम् । (३) प्रत्ययादिभूतानां फादीनामायन्नादय आदेशाः स्युः । नाडायनः । (४) प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । भवन्ति । (५) अभ्यस्तात्परस्य झस्याऽदित्यादेशः स्यात् । जक्षति । (६) अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । (७) शीङःपरस्य झादेशस्याऽतो रुडागमः स्यात् । शेरते । (८) वेत्तेः परस्य झादेशस्याऽतो रुडागमो वा स्यात् । संविद्रते । (९) छन्दसि बहुलं रुडागमः स्यात् । धेनवो दुह्रे ।

९ अतो भिस ऐस् ।
१० बहुलं छन्दसि ।
११ नेदमदसोरकोः ।
१२ टाङसिङसामिनात्स्याः ।
१३ ङेर्यः ।
१४ सर्वनाम्नः स्मै ।
१५ ङसिङ्योः स्मात्स्मिनौ ।
१६ पूर्वादिभ्यो नवभ्यो वा ।
१७ जसः शी ।
१८ औङ आपः ।
१९ नपुंसकाच्च ।
२० जश्शसोः शिः ।
२१ अष्टाभ्य औश् ।
२२ षड्भ्यो लुक् ।
२३ स्वमोर्नपुंसकात् ।
२४ अतोऽम् ।

(१) अकारान्तादङ्गाद्भिस ऐस् स्यात् । रामैः । (२) छन्दसि बहुलं भिस ऐसादेशः । अग्निर्देवेभिः । (३) अककारयोरिदमदसोर्भिस ऐस् न । एभिः । (४) अकारान्तादङ्गाट्टादिनां क्रमादिनादय आदेशाः स्युः । रामेण । (५) अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् । रामाय । (६) अतः सर्वनाम्नो ङेइत्यस्य स्मै स्यात् । सर्वस्मै । (७) अतः सर्वनाम्नो ङसि ङ्योरेतौस्तः । सर्वस्मात् । (८) एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । (९) अदन्तात् सर्वनाम्नः परस्य जशः शी स्यात् । सर्वे । (१०) आबन्तादङ्गात्परस्यौङः शी स्यात् । रमे । (११) क्लीवादौङः शी स्यात् । ज्ञाने । (१२) क्लीवादनयोः शिः स्यात् । ज्ञानानि । (१३) कृताकारादष्टनोजश्शसोरौश् । अष्टौ । (१४) षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । कति । (१५) क्लीबादनयोर्लुक् स्यात् । वारि । (१६) अतोऽङ्गात्क्लीबात्स्वमोरम् स्यात् । ज्ञानम् ।

२५ अद्ड्डतरादिभ्यः पञ्चभ्यः।
२६ नेतराच्छन्दसि।
२७ युष्मदस्मद्भ्यां ङसोऽश्।
२८ ङे प्रथमयोरम्।
२९ शसो न।
३० भ्यसोभ्यम्।
३१ पञ्चम्या अत्।
३२ एकवचनस्य च।
३३ साम आकम्।
३४ आत औ णलः।
३५ तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्।
३६ विदेः शतुर्वसुः।
३७ समासेऽनञ्पूर्वे क्त्वो ल्यप्।
३८ क्त्वाऽपि च्छन्दसि।
३९ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः।

(१) एभ्यः क्लीबेभ्यः स्वमोरद्डादेशस्यात्। कतरत्। (२) स्वमोरद्ड न छन्दसि। वार्त्रघ्नमितरम्। (३) आभ्यां ङसोऽशादेशः स्यात्। तव। (४) युष्मदस्मद्भ्यां परस्य 'ङे' इत्यस्य प्रथमाद्वितीययोश्चाऽमादेश स्यात्। त्वम्। (५) आभ्यां शसो नः स्यात्। युष्मान्। (६) आभ्यां परस्य भ्यसोभ्यम् अभ्यःम्वाऽऽदेशःस्यात्। युष्मभ्यम्। (७) आभ्यां पञ्चम्या भ्यसोऽत् स्यात्। युष्मत्। (८) आभ्यां पञ्चम्येकवचनस्य अत् स्यात्। त्वत्। (९) आभ्यां परस्य साम आकम् स्यात्। युष्माकम्। (१०) आदन्ताद्धातोर्णल औकारादेशः स्यात्। पपौ। (११) आशिषि तुह्योस्तातङ्वा स्यात्। भवतात्। (१२) वेत्तेः परस्य शतुर्वसुरादेशो वा। विदन्। (१३) अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशःस्यात्। प्रकृत्य। (१४) अनञ्पूर्वे समासे क्त्वादेशः स्यादपिशब्दाल्ल्यबपि, समासेऽसमासे च छन्दसि। परिधापयित्वा। (१५) सुपां स्थाने सुलुगादयः

याडाड्यायाजालः ।

४० अमो मश् ।

४१ लोपस्त आत्मनेपदेषु ।

४२ ध्वमो ध्वात् ।

४३ यजध्वैनमिति च ।

४४ तस्य तात् ।

४५ तप्तनप्तनथनाश्च ।

४६ इदन्तो मसि ।

४७ क्त्वो यक् ।

४८ इष्ट्वीनमिति च ।

४९ स्नात्व्यादयश्च ।

५० आज्जसेरसुक् ।

५१ अश्वक्षीरवृषलवणाना-मात्मप्रीतौ क्यचि ।

५२ आमि सर्वनाम्नः सुट् ।

५३ त्रेस्त्रयः ।

---

स्युः । ऋजवः सन्तु पन्थाः । (१) मिबादेशस्यामो मश् स्यात् । वधीं वृत्रम् । (२) आत्मनेपदेषु तस्य लोपश्छन्दसि । देवा अदुह । (३) ध्वमो ध्वादित्यादेशश्छन्दसि । वारयध्वात् । (४) एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते। यजध्वैनम् । (५) मध्यमपुरुषबहुवचनस्यस्थाने तात् स्यात् । कृणुतात् । (६) मध्यमपुरुषबहुचनस्य स्थाने एते आदेशाः स्युः । शृणोत ग्रावाणः । (७) मस इमागमः स्याच्छन्दसि । नमो भरन्त एमसि । (८) क्त्वो यमागमः स्याच्छन्दसि । सुपर्णो गत्वाय । (९) क्त्वाप्रत्ययस्य 'ईनम्' अन्तादेशो निपात्यते । इष्ट्वीनं देवान् । (१०) अकारस्य इकारो निपात्यते । स्नात्वी मलादिव । (११) अवर्णान्तादङ्गात्परस्य जसोऽसुक्स्यात् । ब्राह्मणासः । (१२) एषां क्यचि असुगागमः स्यात् । अश्वस्यति वडवा । (१३) अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमःस्यात् । सर्वेषाम् । (१४) त्रिशब्दस्य त्रयादेशःस्यादामि । त्रया·

५४ [1]ह्रस्वनद्यापो नुट्।
५५ [2]षट्चतुर्भ्यश्च।
५६ श्रीग्रा[3]मण्योश्छन्दसि।
५७ गोः [4]पादान्ते।
५८ इदितो [5]नुम्धातोः।
५९ शे [6]मुचादीनाम्।
६० [7]मस्जिनशोर्झलि।
६१ [8]रधिजभोरचि।
६२ [9]नेट्यलिटि रधेः।
६३ [10]रभेरशब्लिटोः।
६४ [11]लभेश्च।
६५ [12]आङो यि।
६६ [13]उपात्प्रशंसायाम्।
६७ [14]उपसर्गात्खल्घञोः।
६८ न [15]सुदुर्भ्यां केवलाभ्याम्।
६९ [16]विभाषा चिण्णमुलोः।

णाम्। (१) ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्। रामाणाम्। (२) षट्संज्ञकेभ्यतुरश्च परस्यामो नुडागमः स्यात्। चतुर्णाम्। (३) आमो नुट्। ग्रामणीनाम्। (४) गोः परस्य आमो नुडागमःस्यात् पादान्ते। शूर गोनाम्। (५) इदितोधातोर्नुमागमःस्यात्। इन्दति। (६) एषां नुम्स्याच्छे परे। मुञ्चति। (७) अनयोर्नुम्स्याज्झलि। मङ्क्ता। (८) एतयोर्नुमागमःस्यादचि। जम्भते। (९) लिड्वर्जे इटि रधेर्नुम्न। रधिता। (१०) रभेर्नुम् स्यादचि नतु शब्लिटोः। अररम्भत्। (११) लभेर्नुम्स्यादचि न तु शब्लिटोः। अललम्भत्। (१२) आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते। (१३) उपात्परस्य लभेर्नुम्स्याद्यादौ प्रत्यये विवक्षिते प्रशंसायाम्। उपालम्भ्यः साधुः। (१४) उपसर्गादेव लभेर्नुम् स्यात्। ईषत्प्रलम्भः। (१५) उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम्न स्यात्। (१६) लभेर्नुमागमो वा स्यात्।, अलम्भि।

७० उगिदचां सर्वनामस्थानेऽधातोः ।
७१ युजेरसमासे ।
७२ नपुंसकस्य झलचः ।
७३ इकोऽचि विभक्तौ ।
७४ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।
७५ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।
७६ छन्दस्यपि दृश्यते ।
७७ ई च द्विवचने ।
७८ नाभ्यस्ताच्छतुः ।
७९ वा नपुंसकस्य ।
८० आच्छीनद्योर्नुम् ।
८१ शप्श्यनोर्नित्यम् ।
८२ सावनडुहः ।
८३ दृक्स्ववःस्वतवसां छन्दसि

(१) अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात् सर्वनामस्थाने । (२) युजेःसर्वनामस्थाने नुमागमः स्यादसमासे । युङ् । (३) झलन्तस्याजन्तस्य च क्लीवस्य नुमागमःस्यात् । ज्ञानानि । (४) इगन्तस्य क्लीवस्य नुमागमः स्याद्विभक्तौ । वारिणी । (५) प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीवं पुंवद्वा स्याट्टादावचि । अनादये । (६) अस्थ्यादीनामङ्स्याट्टादावचि । अस्थ्ना । (७) अस्थ्यादीनामनङ्छन्दस्यन्यत्रापि दृश्यते । अस्थभिः । (८) अस्थ्यादीनामीकारादेशः स्याच्छन्दसि द्विवचने । (९) अभ्यस्तात्परस्य शतुर्नुम्न । ददत् । (१०) अभ्यस्तात्परो यः शता तदन्तस्य क्लीवस्य नुम्वा स्यात्सर्वनामस्थाने । ददति । ददन्ति । (११) अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः । (१२) शप्श्यनोरात् परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परयोः । (१३) अस्य नुम् स्यात्सौ परे । अनड्वान् । (१४) एषां नुम् स्यात्सौ छन्दसि । ईदृङ् ।

८४ दिव[1] औत्।
८५ पथिमथ्यृभुक्षामात्[2]।
८६ इतोऽत्सर्वनामस्थाने[3]।
८७ थो न्थः[4]।
८८ भस्य टेर्लोपः[5]।
८९ पुंसोऽसुङ्[6]।
९० गोतो णित्[7]।
९१ णलुत्तमो वा[8]।
९२ सख्युरसंबुद्धौ[9]।
९३ अनङ् सौ[10]।
९४ ऋदुशनस्पुरुदंसोऽनेहसां च[11]
९५ तृज्वत् क्रोष्टुः[12]।
९६ स्त्रियां च[13]।
९७ विभाषा तृतीयादिष्वचि[14]।
९८ चतुरनडुहोरामुदात्तः[15]।
९९ अम्सम्बुद्धौ[16]।

(१) दिविति प्रातिपदिकस्य औत्स्यात्सौ परे। द्यौः। (२) पथ्यादीनामाकारोऽन्तादेशः स्यात्सौ परे। पन्थाः। (३) पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने। (४) पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। (५) भस्यपथ्यादेष्टेर्लोपः स्यात्। पथः। (६) सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। पुमान्। (७) गोशब्दात्परं सर्वनामस्थानं णिद्वत् स्यात्। गौः। (८) उत्तमो णल्वा णित्स्यात्। जगाद-जगद।

(९) सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्। सखायौ। (१०) सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ परे। सखा। (११) ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ। (१२) क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते। क्रोष्टा। (१३) स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते। (१४) अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्टा। (१५) अनयोराम् स्यात्सर्वनामस्थाने सचोदात्तः। चत्वारः। (१६) अनयोरम् स्यात्सम्बुद्धौ। हे अनड्वन्।

१०० ॠत इद्धातोः ॥ ५ ॥

१०१ उपधायाश्च ।

१०२ उदोष्ठ्यपूर्वस्य ।

१०३ बहुलं छन्दसि ।

[ 'युवोरष्टाभ्यो लोपो रधिशप्श्यनोरुपधायाश्चोणि' ॥ ]

(१) ॠदन्तस्य धातोरङ्गस्येत्स्यात् । किरति । (२) धातोरुपधाभूतस्य ॠत इत्स्यात् । कीर्त्तयति । (३) अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उत्स्यात् । पिपूर्त्तः । (४) ॠकारान्तस्यधातोर्बहुलमुकारादेशः स्याच्छन्दसि विषये । ततुरिः ।

इति सप्तमाध्यायस्य प्रथमः पादः ॥

## द्वितीयः पादः ।

१ सिचि वृद्धिः परस्मैपदेषु ।

२ अतो ल्रान्तस्य ।

३ वदव्रजहलन्तस्याचः ।

४ नेटि ।

५ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।

६ ऊर्णोतेर्विभाषा ।

(५) इगन्तस्याङ्गस्य वृद्धिः स्यात्परस्मैपदे सिचि । अचैषीत् । (६) अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्याऽतो वृद्धिः स्यात्परस्मैपदपरे सिचि । माभवानालीत् । (७) वदेर्व्रजेर्हलन्तस्य चाङ्गस्याऽचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । (८) इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न स्यात् । मा भवानतीत् । (९) हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत् । (१०) इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । और्णावीत् ।

७ अतो ह्लादेर्लघोः ।
८ नेड् वशि कृति ।
९ तितुत्रतथसिसुसरकसेषु च ।
१० एकाच उपदेशेऽनुदात्तात् ।
११ श्र्युकः क्किति ।
१२ सनि ग्रहगुहोश्च ।
१३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।
१४ श्वीदितो निष्ठायाम् ।
१५ यस्य विभाषा ।
१६ आदितश्च ।
१७ विभाषा भावादिकर्मणोः ।
१८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ।
१९ धृषिशसी वैयात्ये ।

(१) ह्लादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत् । (२) वशादेः कृत इण्न स्यात् । सुशर्मा । (३) एषां दशानां कृत्प्रत्ययानामिण्न स्यात् । शस्त्रम् । (४) उपदेशे यो धातुरेकाजनुदात्तश्च ततःपरस्य वलादेरार्धधातुकस्येट् न स्यात् । एधा ञ्चकर्थ । (५) श्रिञ एकाच उगन्ताच्च परयोर्गित्किितोरिण्न स्यात् । सस्वरिव । (६) ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । जिघृक्षति । (७) एभ्यो लिट इण्न स्यात् । (८) श्वयतेरीदितश्च निष्ठाया इण्न । उन्नः । (९) यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठाया इण्न स्यात् । समक्तः । (१०) आकारेतो निष्ठाया इण्न स्यात् । प्रफुल्तः । (११) भावे आदिकर्मणि च आदितो निष्ठाया इड्वा स्यात् । प्रस्वेदितश्चैत्रः । (१२) क्षुब्धादीन्यष्टावनिट्कानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु (१३) एतौ निष्ठायामनिटौ

२० दृढः स्थूलबलयोः ॥ १ ॥
२१ प्रभौ परिवृढः ।
२२ कृच्छ्रगहनयोः कषः ।
२३ घुषिरविशब्दने ।
२४ अर्दः संनिविभ्यः ।
२५ अभेश्चाविदूर्ये ।
२६ णेरध्ययने वृत्तम् ।
२७ वा दान्तशान्तपूर्णदस्त-
स्पष्टच्छन्नज्ञप्ताः ।
२८ रुष्यमत्वरसंघुषास्वनाम् ।
२९ हृषेर्लोमसु ।
३० अपचितश्च ।
३१ ह्रुह्वरेश्छन्दसि ।
३२ अपरिह्वृताश्च ।
३३ सोमे ह्वरितः ।
३४ ग्रसितस्कभितस्तभितोत्त-
भितचत्तविकस्ता विशस्त-
शंस्तृशास्तृतरुतृतरूतृवरु-
तृवरूतृवरूत्रीरुज्ज्वलिति-
क्षरितिवमित्यमितीति च ।

एवाऽनिटौ स्तः । (१) स्थूले बलवति च 'दृढ' इति निपात्यते । (२) प्रभौ 'परिवृढ' इति निपात्यते । (३) कषो निष्ठायामिण्न स्यादेतयोरर्थयोः।कष्टम् ।

(४) घुषिर्निष्ठायामनिट् स्यात् । घुष्टा रज्जुः । (५) संनिविपूर्वाददें-र्निष्ठाया इण्न स्यात् । समर्णः । (६) अभिपूर्वाददेंर्निष्ठाया इण्नस्यादाविदूर्येथें। अभ्यर्णम् । (७) ण्यन्ताद्वृतेःक्तस्येडभावो णिलुक् चाधीयमानेथें । वृत्तम् ।

(८) एतेणिचि निष्ठान्ता वा निपात्यन्ते । दान्तः । (९) एभ्यो निष्ठाया इड् वा । रुषितः । (१०) हृषेर्निष्ठाया इड् वा स्याल्लोमसु विषये । हृष्टं हृषितं-लोम । (११) चायतेरपचित इतिर्निपातोऽयं वा स्यात । (१२) ह्वरेर्निष्ठायां 'ह्रु' आदेशः स्याच्छन्दसि । अह्रुतमसि । (१३)पूर्वेण प्राप्तस्य आदेशस्य अभावो निपात्यते । (१४) सोमे ह्वरित इति निपात्यते । (१५) एतेऽष्टादश

३५ आर्धधातुकस्येड्वलादेः ।
३६ स्नुक्रमोरनात्मनेपदनिमित्ते।
३७ ग्रहोऽलिटि दीर्घः ।
३८ वृतो वा ।
३९ न लिङि ।
४० सिचि च परस्मैपदेषु ॥२॥
४१ इट् सनि वा ।
४२ लिङ्सिचोरात्मनेपदेषु ।

४३ ऋतश्च संयोगादेः ।
४४ स्वरतिसूतिसूयतिधूञूदितो वा
४५ रधादिभ्यश्च ।
४६ निरः कुषः ।
४७ इण्निष्ठायाम् ।
४८ तीषसहलुभरुषरिषः ।
४९ सनीवन्तर्धभ्रस्जदम्भुश्रि-
स्वृयूर्णुभरज्ञपिसनाम् ।

निपात्यते । (१) वलादेरार्धधातुकस्ये डागमः स्यात् । बभूविथ । (२) स्नुक्रमोरात्मनेपदनिमित्ताभावे एव इट्, नान्यत्र । अक्रमीत् । (३) एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्नतु लिटि । ग्रहीता । (४) वृङ्वृञ्भ्यामृदन्ताच्च- टो दीर्घो वा स्यान्नतु लिटि । तरीता । (५) वृतोलिङ इटो दीर्घो न स्यात् । वरिषीष्ट । (६) अत्र वृत इटो दीर्घो न । अतारिष्टाम् । (७) वृङ्वृञ्भ्या- मृदन्ताच्च सन इड्वा स्यात् । तितरि- षति । (८) वृङ्वृञ्भ्यामृदन्ताच्च परयो- लिङ्सिचोरिड्वा स्यात्तङि । (९) ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरि- ड्वा स्यात्तङि । स्तरिषीष्ट । (१०) स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातु- कस्य वेट्स्यात् । सिषेद्ध । (११) रधा- दिभ्यो वलाद्यार्द्धधातुकस्य वेट्स्यात् । ररन्धिथ । (१२) निरःपरस्मात्कुषो वलादेरार्धधातुकस्येड् वा स्यात् ।

(१३) निरःकुषो निष्ठाया इट् स्यात् । निष्कुषितः । (१४) 'इच्छ- त्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । रोपिता । (१५) इवन्तेभ्य

५० क्लिशः क्त्वानिष्ठयोः ।
५१ पूङश्च ।
५२ वसतिक्षुधोरिट् ।
५३ अञ्चेः पूजायाम् ।
५४ लुभो विमोहने ।
५५ जॄव्रश्च्योः क्त्वि ।
५६ उदितो वा ।
५७ सेऽसिचि कृतचृतच्छृदतृदनृतः ।
५८ गमेरिट् परस्मैपदेषु ।
५९ न वृद्भ्यश्चतुर्भ्यः ।
६० तासि च क्लृपः ॥ ३ ॥
६१ अचस्तास्वत्थल्यनिटो नित्यम् ।
६२ उपदेशेऽत्वतः ।
६३ ऋतो भारद्वाजस्य ।

ऋधादिभ्यश्च सन इड्वा स्यात् । दुद्यूषति । (१) इड्वास्यात् । क्लिशितः । (२) पूङः क्त्वानिष्ठयोरिड्वा स्यात् (३) आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् । उषितः । (४) पूजार्थादञ्चेः क्त्वानिष्ठयोरिट् स्यात् । अञ्चितः । (५) लुभः क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये । लुभितः । (६) आभ्यां क्त्व इट् स्यात् । जरित्वा । (७) उदितः परस्येड्वास्यात् । शमित्वा । (८) एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति । (९) गमेः परस्य सकारादेरिट् स्यात् । गमिष्यति । (१०) एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोभावे । वर्त्स्यति । (११) क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे । कल्प्तासि । (१२) उपदेशेऽजन्तोयोधातुस्तासौ नित्याऽनिट् ततः परस्य थल इण्न स्यात् (१३) उपदेशे अकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् । (१४) तासौ नित्याऽनिट ऋदन्तादेव थलो नेट्

६४ [1]बभूथाततन्थजगृम्भववर्थेति निगमे ।
६५ [2]विभाषा सृजिदृशोः ।
६६ [3]इडत्त्यर्तिव्ययतीनाम् ।
६७ [4]वस्वेकाजाद्घसाम् ।
६८ [5]विभाषा गमहनविदविशाम् ।
६९ [6]सनिंससनिवांसम् ।
७० [7]ऋद्धनोः स्ये ।
७१ [8]अञ्जेः सिचि ।
७२ स्तुसुधूञ्भ्यः परस्मैपदेषु ।
७३ [10]यमरमनमातां सक् च ।
७४ [11]स्मिपूङ्रञ्ज्वशां सनि ।
७५ [12]किरश्च पञ्चभ्यः ।
७६ [13]रुदादिभ्यः सार्वधातुके ।
७७ [14]ईशः से ।
७८ [15]ईडजनोर्ध्वे च ।

भारद्वाजस्य मतेन । (१) एषां वेदे इडभावो निपात्यते । ववरिथ । (२) आभ्यां थल इड्वा स्यात् । (३) अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट्स्यात् । आरिथ । (४) कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट्,नान्येषाम् । आदिवान् । (५) एभ्यो वसेरिड्वा स्यात् । जग्मिवान् । (६) सनिमित्येतत्पूर्वात्सनतेः सनोतेर्वा क्वसोरिट् एत्वाभ्यासलोपाभावश्च निपात्यते । (७) ऋतो हन्तेश्च स्यस्य इट्स्यात् । भरिष्यति । (८) अञ्जःसिचो नित्यमिट्स्यात् । आञ्जीत् । (९) एभ्यः सिचः इट् स्यात्परस्मैपदेषु । अधासीत् । (१०) एषां सक्स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अधामीत् । (११) स्मि पूङ् ऋ अञ्जू अशू एभ्यः सन इट्स्यात् । सिस्मयिषते । (१२) कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट्स्यात् । पिपृच्छिषति । (१३) रुद् स्वप् श्वस् अन् जक्ष एभ्यो वलादेःसार्वधातुकस्येट्स्यात् । रोदिति । (१४) ईश उत्तरस्य 'से' इत्यस्य सार्वधातुकस्य इडागमः स्यात् । ईशिषे । (१५) ईशीड्जनां सेध्वे-

७९ लिङः सलोपोऽनन्त्यस्य ।
८० अतो येयः ॥ ४ ॥
८१ आतो ङितः ।
८२ आने मुक् ।
८३ ईदासः ।
८४ अष्टन आ विभक्तौ ।
८५ रायो हलि ।
८६ युष्मदस्मदोरनादेशे ।

८७ द्वितीयायां च ।
८८ प्रथमायाश्च द्विवचने भाषायाम् ।
८९ योऽचि ।
९० शेषे लोपः ।
९१ मपर्यन्तस्य ।
९२ युवावौ द्विवचने ।
९३ यूयवयौ जसि ।

शब्दयोःसार्वधातुकयोरिट्स्यात् । इंडिषे । (१) सार्वधातुकलिङोऽनन्त्यस्यसस्य लोपःस्यात् । (२) अतःपरस्यसार्वधातुकाऽवयवस्य 'या' इत्यस्य'इय्'स्यात्। भवेत् । (३)आतःपरस्य ङितामाकारस्य इय् स्यात् । एधेते । (४) अङ्गस्यातोमुमागमःस्यादाने परे । पचमानं चैत्रंपश्य। (५) आसः परस्य आनस्य ईत्स्यात् । आसीनः। (६)अष्टन आत्वं स्याद्धलादौ विभक्तौ। अष्टौ।(७) रैशब्दस्य आकारोऽन्तादेशः स्याद्धलादौ विभक्तौ । राः । (८) अनयोराकारादेशः स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । (९) युष्मदस्मदोराकारः स्याद्द्वितीयायाम् । त्वाम् । (१०) इह युष्मदस्मदोराकारोऽन्तादेशः स्यात्। युवाम् । (११) अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । (१२) आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । त्वम् । (१३) अधिकारोऽयम् । (१४) द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ । युवाम् । (१५) युष्मदस्मदोर्मपर्यन्तस्य यूयवयौ स्तो जसि ।

९४ त्वाहौ सौ ।
९५ तुभ्यमह्यौ ङयि ।
९६ तवममौ ङसि ।
९७ त्वमावेकवचने ।
९८ प्रत्ययोत्तरपदयोश्च ।
९९ त्रिचतुरोः स्त्रियां तिसृचतसृ ।
१०० अचि र ऋतः ॥ ५ ॥

यूयम् । (१) युष्मदस्मदोर्मपर्यन्तस्य 'त्व' 'अह' इत्येतावादेशौ स्तः सौ परे । त्वम् । (२) अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । तुभ्यम् ।

(३) अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि । तव । (४) एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ । त्वाम् । (५) मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च । त्वदीयः । (६) स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः । तिस्रः । (७) तिसृचतसृ

१०१ जराया जरसन्यतरस्याम् ।
१०२ त्यदादीनामः ।
१०३ किमः कः ।
१०४ कु तिहोः ।
१०५ क्वाऽति ।
१०६ तदोः सः सावनन्त्ययोः ।
१०७ अदस औ सुलोपश्च ।
१०८ इदमो मः ।

एतयोर्ऋकारस्य रेफादेशः स्यात् । तिस्रः । (८) जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । निर्जरसौ । (९) एषामकारोऽन्तादेशः स्याद्विभक्तौ । द्वौ । (१०) किमः कः स्याद्विभक्तौ । कः । (११) किमः कुःस्यात्तादौ हादौ च विभक्तौ परतः । कुतः । (१२) किमः कादेशः स्यादति । क्व । (१३) त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । (१४) अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । असौ । (१५) इदमो मःस्यात्सौ परे । अयम् ।

१०९ दश्च ।
११० यः सौ ।
१११ इदोऽय् पुंसि ।
११२ अनाप्यकः ।
११३ हलि लोपः ।
११४ मृजेर्वृद्धिः ।
११५ अचो ञ्णिति ।
११६ अत उपधायाः ।
११७ तद्धितेष्वचामादेः ।
११८ किति च ।

['सिचि प्रभाविट्सन्यच· स्तास्वदातो जराया अष्टादश' ]॥

## अथ तृतीयः पादः ।

१ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।

(१) इदमो दस्य मः स्याद्विभक्तौ । इमौ । (२) इदमो दस्य यः स्याद्विभक्तौ । इयम् । (३) इदम इदोऽय् स्यात्सौ पुंसि । अयम् । (४) अककारस्य इदम इदोऽन् स्यादापि विभक्तौ । अनेन । (५) अककारस्य इदम इदो लोपः स्यादापि हलादौ । आभ्याम् । (६) मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे । मार्ष्टि । (७) ञिति णिति च परे अजन्ताङ्गस्य वृद्धिः स्यात् । सखायौ । (८) उपधाया अतो वृद्धिः स्याञ्ञितिणिति च प्रत्यये परे । चखाद । (९) ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् । आश्वपतम् । (१०) किति तद्धित च परेऽचामादेरचो वृद्धिः स्यात् । नाडायनः ।

इति सप्तमाध्यायस्य द्वितीयः पादः ।

(११) एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् ञिति णिति किति

२ केकयमित्रयुप्रलयानां यादेरियः ।
३ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।
४ द्वारादीनां च ।
५ न्यग्रोधस्य च केवलस्य ।
६ न कर्मव्यतिहारे ।
७ स्वागतादीनां च ।
८ श्वादेरिञि ।
९ पदान्तस्यान्यतरस्याम् ।
१० उत्तरपदस्य ।
११ अवयवादृतोः ।
१२ सुसर्वार्धाज्जनपदस्य ।
१३ दिशोऽमद्राणाम् ।
१४ प्राचां ग्रामनगराणाम् ।
१५ संख्यायाः संवत्सरसंख्यस्य च ।

च । दाविकाकूलाः । (१) एषां यकारादेरिय् आदेशः स्याञ्ञिति णिति किति च तद्धिते परे । (२) पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः । (३) द्वारादीनां न वृद्धिरैजागमश्च । शौवस्तिकम् । (४) अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । (५) अत्र ऐच् न स्यात् । व्यावक्रोशी । (६) ऐच् न स्यात् । स्वागतिकः । (७) ऐच् न । श्वाभस्त्रिः । (८) श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा स्यात् । श्वापदम् । (९) अधिकारोऽयम् । (१०) अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे । पूर्ववार्षिकः । (११) उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । (१२) दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । (१३) दिशः परेषां नगरवाचिनां ग्रामवाचिनामवयवस्य च वृद्धिः । पूर्वैषुकामशमः (१४) सङ्ख्याया उत्तरपदस्य वृद्धिः ।

१६ वर्षस्याऽभविष्यति ।
१७ परिमाणान्तस्याऽसंज्ञाशाणयोः ।
१८ जे प्रोष्ठपदानाम् ।
१९ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।
२० अनुशतिकादीनां च ॥ १ ॥
२१ देवताद्वन्द्वे च ।
२२ नेन्द्रस्य परस्य ।
२३ दीर्घाच्च वरुणस्य ।
२४ प्राचां नगरान्ते ।
२५ जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ।
२६ अर्धात् परिमाणस्य पूर्वस्य तु वा ।

स्याञ्ञिदादौ । द्विसांवत्सरिकः । (१) उत्तरपदस्य वृद्धिः स्यात् । द्विवार्षिकः । (२) उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । परमनैष्किकः । (३) प्रोष्ठपदानामुत्तरपदस्याऽचामादेरचो वृद्धिः स्याज्जाताऽर्थे ञिति णिति किति च । प्रोष्ठपादः । (४) हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च । सौहार्दः । (५) एषामुभयपदवृद्धिः स्यात् ञिति णिति किति । आधिदैविकम् । (६) अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे । आग्निमारुतम् । (७) परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । (८) दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । (९) प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाऽचामादेरचो वृद्धिर्ञिति णिति किति च । सौह्मनागरः । (१०) जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याऽचामादेरचो वृद्धिरुत्तरपदस्य तु वा ञिति णिति किति च । कौरुजाङ्गलम् । (११) अर्धात्परिमाणवाच-

२७ [1]नातः परस्य ।
२८ [2]प्रवाहणस्य ढे ।
२९ [3]तत्प्रत्ययस्य च ।
३० [4]नञः शुचीश्वरक्षेत्रज्ञकुशल निपुणानाम् ।
३१ [5]यथातथायथापुरयोः पर्याये।
३२ [6]हनस्तोऽचिण्णलोः ।
३३ [7]आतो युक्चिण्कृतोः ।
३४ [8]नोदात्तोपदेशस्य मान्तस्यानाचमेः ।
३५ [9]जनिवध्योश्च ।
३६ [10]अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ ।
३७ [11]शाच्छासाह्वाव्यावेपां युक् ।

कस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा ञिति णिति किति च । अर्धद्रौणिकम्।(१)अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न, पूर्वपदस्य तु वा ञिदादौ । अर्धप्रस्थिकम् । (२) प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढपरे । प्रावाहणेयः । (३) ढान्तस्य प्रवाहणस्योत्तरपदस्याऽचामादेरचो वृद्धिः पूर्वपदस्य तु वा । प्रावाहणेयिः । (४) नञः परेषां शुच्यादिपञ्चनामादेरचो वृद्धिःपूर्वपदस्य तु वा ञिदादौ परे । आशौचम् । (५) नञः परयोरेतयोःपूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ । आयथातथ्यम् । (६) हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । (७) आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च । दायिता । (८)उपधाया वृद्धिर्न स्याच्चिणि ञितिणिति कृति च । अशमि । (९) अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि । (१०) एषां पुगागमः स्यण्णौ परे। चपयति । (११) एषां युगागमः। शाययति ।

३८ वो विधूनने जुक्[1] ।
३९ लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने[2] ।
४० भियो हेतुभये षुक्[3] ॥ २ ॥
४१ स्फायो वः[4] ।
४२ शदेरगतौ तः[5] ।
४३ रुहः पोऽन्यतरस्याम्[6] ।
४४ प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः[7] ।
४५ न यासयोः[8] ।
४६ उदीचामातः स्थाने यकपूर्वायाः[9] ।
४७ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि[10] ।
४८ अभाषितपुंस्काच्च[11] ।
४९ आदाचार्याणाम्[12] ।
५० ठस्येकः[13] ।
५१ इसुसुक्तान्तात् कः[14] ।

(१) वातेर्जुकस्याण्णौ कम्पेऽर्थे । वाजयति । (२) लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति । (३) इकारान्तस्य भियः षुक्स्यात् णौ हेतुभये । भीषयते । (४) स्फायो वःस्याण्णौ । स्फावयति । (५) शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शातयति । (६) रुहः पकारोऽन्तादेशो वा स्यात् णौ परे । रोपयति । (७) प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप् सुपः परो न चेत् । सर्विका । (८) यत्तदोरस्येन्न स्यात् । (९) यकपूर्वस्य स्त्री प्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्यैद्वा स्यादापि परे । आर्यका । (१०) एषामत इद्वा स्यात् । अजका । (११) एतस्माद्विहितस्याऽतः स्थानेऽत इद्वा स्यात् । गङ्गका । (१२) पूर्वसूत्रविषये आद्वा स्यात् । गङ्गाका । (१३) अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः । (१४) इस् उस् उक् त

५२ चजोः कु घिण्ण्यतोः ।[1]
५३ न्यङ्क्वादीनां च ।[2]
५४ हो हन्तेर्ञ्णिन्नेषु ।[3]
५५ अभ्यासाच्च ।[4]
५६ हेरचङि ।[5]
५७ सन्लिटोर्जेः ।[6]
५८ विभाषा चेः ।

एतदन्तात्परस्य ठस्य कः स्यात् । औदश्वित्कः । (१) चस्य जस्य च कुत्वं स्यात्, घिति ण्यति च प्रत्यये परे । मार्ग्यः । (२) कुत्वं स्यात् । न्यङ्कुः । (३) ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । वृत्रघ्नः । (४) अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघानिथ । (५) अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्नतु चङि । जिघाय । (६) जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । (७ अभ्यासात्परस्य चिञः

५९ न क्वादेः ।
६० अजिव्रज्योश्च ॥ ३ ॥
६१ भुजन्युब्जौ पाण्युपतापयोः ।
६२ प्रयाजानुयाजौ यज्ञाङ्गे ।[11]
६३ वञ्चेर्गतौ ।[12]
६४ ओक उचः के ।[13]
६५ ण्य आवश्यके ।[14]
६६ यजयाचरुचप्रवचर्चश्च ।[15]

कुत्वं वा स्यात्सनि लिटि च । प्रणिचिकाय । (८) क्वादेर्धातोश्चजोः कुत्वं न । गर्ज्यम् । (९) अनयोर्जकारस्य न कुत्वम् । समाजः । (१०) एतयोरेतौ निपातौ । भुजः पाणिः । (११) एतौ निपातौ यज्ञाङ्गे । पञ्चप्रयाजाः । १२) अस्य चकारस्य कुत्वं न गत्यर्थे । वञ्च्यम् । (१३) उचेर्गुण कुत्वे निपात्येते के परे । ओक । (१४) कुत्वं न । अवश्यपाच्यम् । (१५) ण्ये कुत्वं न । याज्यम् ।

६७ वचोऽशब्दसंज्ञायाम् ।
६८ प्रयोज्यनियोज्यौ शक्यार्थे।
६९ भोज्यं भक्ष्ये ।
७० घोर्लोपो लेटि वा ।
७१ ओतः श्यनि ।
७२ क्सस्याचि ।
७३ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।
७४ शमामष्टानां दीर्घः श्यनि ।

(१)वचो ण्ये कुत्वं शब्दसञ्ज्ञां वर्जयित्वा। वाच्यम्। (२) शक्यार्थे ण्ये कुत्वाभावो निपात्यते । (३) भुजेर्ण्यें कुत्वाभावो निपात्यते भक्ष्ये । (४) लेटि परतो घुसञ्ज्ञकस्य लोपो वा स्यात् । दधद्रत्नानि । (५) लोपः स्यात् श्यनि । श्यति । (६) अजादौ तङि क्सस्य लोपः स्यात्। अघृक्षाताम् । (७) एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। अगूढ । (८) शमादीनां दीर्घः स्यात् श्यनि । प्रणि-

७५ ष्ठिवुक्लमुचमां शिति ।
७६ क्रमः परस्मैपदेषु ।
७७ इषुगमियमां छः ।
७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।
७९ ज्ञाजनोर्जा ।
८० प्वादीनां ह्रस्वः ॥ ४ ॥
८१ मीनातेर्निगमे ।

श्यति । (९) एषामचो दीर्घः स्याच्छिति । आचामति। (१०) क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति । क्रामति । (११) एषां छः स्याच्छिति परे । गच्छति । (१२) पादीनां पिबादयः स्युरित्सञ्ज्ञकशकारादौ प्रत्यये परे । सीदति । (१३) अनयोर्जादेशः स्याच्छिति परे। जायते । (१४) प्वादीनां ह्रस्वः स्यात् शिति परे । पुनाति । (१५) मीनातेर्ह्रस्वः स्यात् शिति वेदे । प्रमि-

८२ मिदेर्गुणः ।
८३ जुसि च ।
८४ सार्वधातुकार्धधातुकयोः ।
८५ जाग्रोऽविचिण्णल्ङित्सु ।
८६ पुगन्तलघूपधस्य च ।
८७ नाभ्यस्तस्याऽचि पिति सार्वधातुके ।
८८ भूसुवोस्तिङि ।
८९ उतो वृद्धिर्लुकि हलि ।
९० ऊर्णोतेर्विभाषा ।
९१ गुणोऽपृक्ते ।
९१ तृणह इम् ।
९२ ब्रुव ईट् ।
९४ यङो वा ।

णन्ति । (१) मिदरिको गुणः स्यादित्सञ्ज्ञकशकारादौ प्रत्यये परे । मेद्यति ।

(२) अजादौ जुसीगन्तस्याङ्गस्य गुणः स्यात् । अजागरुः । (३) अनयोः परयोरिगन्तस्याङ्गस्य गुणः स्यात् । भवति । (४) जागरतेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च जजागरतुः । (५) पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः । भविता । (६) लघूपधस्य गुणो न स्यात् अजादौ पिति सार्वधातुके । नेनिजानि ।

(७) भू सू एतयोः सार्वधातुके तिङि गुणो न स्यात् । (८) लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । (९) वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । (१०) ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । और्णोत् । (११) तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । (१२) ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । (१३) यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात् । बोभवीति ।

९५ तुरुस्तुशम्यमः सार्वधातुके।
९६ अस्तिसिचोऽपृक्ते।
९७ बहुलं छन्दसि।
९८ रुदश्च पञ्चभ्यः।
९९ अड्गार्ग्यगालवयोः।
१०० अदः सर्वेषाम्। ५॥
१०१ अतो दीर्घो यञि।
१०२ सुपि च।
१०३ बहुवचने झल्येत्।
१०४ ओसि च।
१०५ आङि चाऽऽपः।
१०६ सम्बुद्धौ च।
१०७ अम्बार्थनद्योर्ह्रस्वः।
१०८ ह्रस्वस्य गुणः।

(१) एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात्। रवीति। (२) विद्यमानात्सिचोऽस्तेश्च परस्याऽपृक्तस्य हल ईडागमः स्यात्। आसीत्। (३) विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमश्छन्दसि बहुलं स्यात्। सर्वमा इदम्। (४) हलादेः पितः सार्वधातुकस्याऽपृक्तस्य ईट् स्यात्। अरोदीत्। (५) अनयोरङ्गस्य अट् स्यात्। (६) अदः परस्याऽपृक्तसार्वधातुकस्य अडागमः स्यात्सर्वमतेन। आदत्। (७) अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके पर। भवामि। (८) यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात्। रामाय। (९) झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः स्यात्। रामेभ्यः। (१०) ओसि परे अतोऽङ्गस्य एकारः स्यात्। रामयोः। (११)आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात्। रमया। (१२) आप एकारः स्यात्सम्बुद्धौ। हे रमे। (१३) अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि। (१४) ह्रस्वस्य गुणः स्यात्संबुद्धौ। हे हरे।

१०९ जसि च।
११० ऋतो ङिसर्वनामस्थानयोः।
१११ घेर्ङिति।
११२ आण्नद्याः।
११३ याडापः।
११४ सर्वनाम्नः स्याड्ढ्रस्वश्च।
११५ विभाषा द्वितीयातृतीयाभ्याम्।
११६ ङेराम्नद्याम्नीभ्यः।
११७ इदुद्भ्याम्।
११८ औत्।
११९ अच्च घेः।
१२० आङो नाऽस्त्रियाम्। ६॥

[ देविकादेवतास्फायो भुजमीनातेरतो दीर्घो विंशतिः ]



(१) ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे। हरयः। (२) ङौ सर्वनामस्थाने च परे ऋदन्तस्याङ्गस्य गुणः स्यात्। (३) घिसञ्ज्ञकस्य ङिति सुपि गुणः स्यात्। हरये। (४) नद्यन्तात्परेषां ङितामाडागमः स्यात्। (५) आपः परस्य ङिद्वचनस्य याडागमः स्यात्। रमायै। (६) आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। (७) आभ्यां ङितः स्याड् वा स्यादापश्च ह्रस्वः। द्वितीयस्यै। (८) नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात्। बहुश्रेयस्याम्। (९) नदीसञ्ज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। मत्याम्। (१०) इदुद्भ्यां परस्य ङेरौत्स्यात्। सख्यौ। (११) इदुद्भ्यामुत्तरस्य ङेरौत्स्याद् घेरन्तादेशश्चाकारः। हरौ। (१२) घेः परस्याङो ना स्याद्स्त्रियाम्। हरिणा।

इति सप्तमाध्यायस्य तृतीयः पादः।

## चतुर्थः पादः ।

१ णौ चङ्युपधाया ह्रस्वः ।
२ नाग्लोपिशास्वृदिताम् ।
३ भ्राजभासभाषदीपजीवमील पीडामन्यतरस्याम् ।
४ लोपः पिबतेरीच्चाभ्यासस्य ।
५ तिष्ठतेरित् ।
६ जिघ्रतेर्वा ।
७ उर्ऋत् ।
८ नित्यं छन्दसि ।
९ दयतेर्दिगि लिटि ।
१० ऋतश्च संयोगादेर्गुणः ।
११ ऋच्छत्यृताम् ।
१२ शृदृप्रां ह्रस्वो वा ।
१३ केऽणः ।
१४ न कपि ।

(१) चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वःस्यात् । अचीकमत । (२) णिच्यग्लोपिनः शास्तेः ऋदिताञ्च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । (३) एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत् । (४) पिबतेरुपधाया लोपःस्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । (५) उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् । (६) जिघ्रतेरुपधाया इदादेशः स्याच्चङ्परे णौ । अजिघ्रपत् । (७) उपधाया ऋवर्णस्य स्थाने ऋत्स्याद्वा चङ्परे णौ । अपीपृथत् । (८) छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम् । अवीवृधत् । (९) दयतेर्दिग्यादेशः स्याल्लिटि । दिग्ये । (१०) ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । जह्वार । (११) तौदादिकऋच्छेः ऋधातोः ऋतां च गुणःस्यात् लिटि । आर । (१२) एषां किति लिटि ह्रस्वो वा । पप्रतुः । (१३) कपरेऽणो ह्रस्वः स्यात् । (१४) कपि परे ह्रस्वो न ।

१५ आपोऽन्यतरस्याम् ।
१६ ऋदृशोऽङि गुणः ।
१७ अस्यतेस्थुक् ।
१८ श्वयतेरः ।
१९ पतः पुम् ।
२० वच उम् ॥ १ ॥
२१ शीङः सार्वधातुके गुणः ।
२२ अयङ् यि क्ङिति ।
२३ उपसर्गाद्ध्रस्व ऊहतेः ।
२४ एतेर्लिङि ।
२५ अकृत्सार्वधातुकयोर्दीर्घः ।
२६ च्वौ च ।
२७ रीङृतः ।
२८ रिङ् शयग्लिङ्क्षु ।
२९ गुणोऽर्तिसंयोगाद्योः ।

कल्याणपञ्चमीकः । (१) कप्यान्तस्य ह्रस्वो वा स्यात् । बहुमालाकः । (२) ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । अदर्शत् । (३) अस्यतेस्थुगागमः स्यादङि । आस्थत् । (४) श्वयतेरिकारस्याऽकारः स्यादङि । अश्वत् । (५) पतः पुमागमः स्यादङि । अपप्तत् । (६) वचेरङ्गस्य उमागमः स्यादङि । अवोचत् । (७) शीङो गुणः स्यात्सार्वधातुके । शेते । (८) शीङोऽयङादेशः स्याद्यादौ क्ङिति परे । शाशय्यते । (९) उपसर्गात्परस्य ऊहतेह्रस्वः स्याद्यादौ क्ङिति प्रत्यये परतः । समुह्यते । (१०) उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । (११) अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे नतु कृत्सार्वधातुकयोः । क्षीयात् । (१२) च्वौ परे पूर्वस्य दीर्घः स्यात् । शुचीभवति । (१३) अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताऽङ्गस्य रीङादेशः स्यात् । पित्र्यम् । (१४) शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । क्रियात् । (१५) अर्तेः संयोगादेऋदन्तस्य च

३० [1]यङि च ।
३१ ई [2]घ्राध्मोः ।
३२ [3]अस्य च्वौ ।
३३ [4]क्यचि च ।
३४ [5]अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ।
३५ न [6]च्छन्दस्यपुत्रस्य ।
३६ [7]दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ।
३७ [8]अश्वाघस्यात् ।
३८ [9]देवसुम्नयोर्यजुषि काठके ।
३९ [10]कव्यध्वरपृतनस्यर्चि लोपः ।
४० [11]द्यतिस्यतिमास्थामित्ति किति । २ ॥
४१ [12]शाच्छोरन्यतरस्याम् ।
४२ [13]दधातेर्हिः ।
४३ [14]जहातेश्च क्त्वि ।

---

गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्रियात् । (१) अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । अरारिता । (२) एतयोरीकारोऽन्तादेशःस्याद्यङि । जेघ्रीयते । (३) अवर्णस्य ईत्स्याच्च्वौ । कृष्णीकरोति । (४) अस्य ईत्स्यात् । पुत्रीयति । (५) एतानि निपात्यन्ते बुभुक्षादिष्वर्थेषु । अशनायति । (६) पुत्रभिन्नस्याऽदन्तस्य क्यचीत्वदीर्घौ न छन्दसि । मित्रयुः । (७) एते क्यचि निपात्यन्ते । दुरस्युः ।

(८) अश्व अघ एतयोः क्यचि आत्स्याच्छन्दसि । अश्वायन्तः । (९) अनयोः क्यचि आत्स्याद्यजुषि कठशाखायाम् । देवायन्तः । (१०) कव्यादीनां लोपः स्यात्क्यचि ऋग्विषये । कव्यन्तः । (११) एषामिकारोऽन्तादेशः स्यात्तादौ किति । दितः । (१२) 'शा' 'छा' इत्येतयोरिकारोऽन्तादेशो वा स्यात्तादौ किति । शितः । (१३) दधातेर्हिः स्यात्तादौ किति । हितम् । (१४)जहातेर्हि इत्ययमादेशः स्यात् क्त्वाप्रत्यये परतः । हित्वा ।

४४ विभाषा छन्दसि ।
४५ सुधितवसुधितनेमधित-
धिष्वधिषीय च ।
४६ दो दद्घोः ।
४७ अच उपसर्गात्तः ।
४८ अपो भि ।
४९ सः स्यार्धधातुके ।
५० तासस्त्योर्लोपः ।
५१ रि च ।

५२ ह एति ।
५३ यीवर्णयोर्दीधीवेव्योः ।
५४ सनि मीमाघुरभलभशक-
पतपदामच इस् ।
५५ आप्ज्ञप्यृधामीत् ।
५६ दम्भ इच्च ।
५७ मुचोऽकर्मकस्य गुणो वा ।
५८ अत्र लोपोऽभ्यासस्य ।
५९ ह्रस्वः ।

(१) जहातेर्ह्यत्ययमादशो वा स्याच्छन्दसि क्त्वाप्रत्यये परे । (२) सुवसुनेम एतत्पूर्वस्य दधातेः क्तप्रत्यय इत्वं निपात्यंत । (३) घुसंज्ञकस्य 'दा' इत्यस्य दत्स्यात्तादौ किति । दत्तः । (४) अजन्तादुपसर्गात्परस्य 'दा' इत्यस्य घोरचस्तः स्यात्तादौ किति । प्रत्तः । (५) अपस्तकारो भादौ प्रत्यये । अद्भिः । (६) सस्य तः सादावार्धधातुके । जिघत्सति । (७) तासेरस्तेश्च लोपः स्यात्सादावार्धधातुके । भवितासि ।

(८) रादौ प्रत्यये तथा। भवितारौ । (९) तासस्त्योः सस्य हःस्यादेतिपरे । एधिताहे । (१०) एतयोरन्त्यस्यलोपः स्याद्यकारे इवर्णे च परे । आदीध्यगतः । (११) एषामच इस् स्यात्सादौ सनि । दिदरिद्रासति । (१२) एषामच ईत्स्यात्सादौ सनि । ईप्सति । (१३) दम्भेरच इत्स्यादीच्च सादौ सनि । धिप्सति । (१४) सादौसनि। मोक्षते । (१५) सनिमीमेत्यारभ्य-यदुक्तं तत्राभ्यासस्य लोपःस्यात् । ईप्सति । (१६) अभ्यासस्याचो

६० हलादिः शेषः ॥ ३ ॥
६१ शर्पूर्वाः खयः ।
६२ कुहोश्चुः ।
६३ न कवतेर्यङि ।
६४ कृषेश्छन्दसि ।
६५ दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ।
६६ उरत् ।
६७ द्युतिस्वाप्योःसम्प्रसारणम् ।
६८ व्यथो लिटि ।
६९ दीर्घ इणः किति ।
७० अत आदेः ।
७१ तस्मान्नुड् द्विहलः ।
७२ अश्नोतेश्च ।
७३ भवतेरः ।

ह्रस्वःस्यात् । बभूव । (१) अभ्यासस्यादिर्हल्शिष्यतेऽन्येहलो लुप्यन्ते । बभूव । (२) अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । (३) अभ्यासकवर्गहकारयोश्चवर्गोन्तादेशः । चकार । (४) कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । (५) यङि अभ्यासस्य चुत्वं न । करीकृष्यते । (६) एतेऽष्टादश निपात्यन्ते । (७) अभ्यासस्यऋवर्णस्य अत् स्यात् । चकार । (८) एतयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते । (९) व्यथोर्लिटि अभ्यासस्यसंप्रसारणं स्यात् । विव्यथे । (१०) अणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । (११) अभ्यासस्याऽऽदेरतो दीर्घः स्यात् । आत । (१२) द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् । आनर्च । (१३ दीर्घादभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । (१४) भवतेरभ्यासोकारस्याऽकारः स्याल्लिटि । बभूव ।

७४ ससूवेति निगमे।

७५ निजां त्रयाणां गुणः श्लौ।

७६ भृञामित्।

७७ अर्तिपिपर्त्योश्च।

७८ बहुलं छन्दसि।

७९ सन्यतः।

८० ओः पुयण्ज्यपरे॥ ४॥

८१ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा।

८२ गुणो यङ्लुकोः।

८३ दीर्घोऽकितः।

८४ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्।

८५ नुगतोऽनुनासिकान्तस्य।

८६ जपजभदहदशभञ्जपशां च

(१) सूतेर्लिटि परस्मैपदे वुगागमो ऽभ्यासस्य चाऽत्त्वं निपात्यते छन्दसि। (२) निज् विज् विषामभ्यासस्य गुणः स्यात् श्लौ। नेनेक्ति। (३) भृञ् माङ् ओहाङ् एषामभ्यासस्य इत् स्यात् श्लौ। बिभर्त्ति। (४) अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। पिपर्त्ति। (५) अभ्यासस्य बहुलमिकारः स्याच्छन्दसि। पूर्णा विवष्टि। (६) अभ्यासस्य इत्स्यात्सनि। (७) सनिपरे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः। अबीभवत्। (८) एषामभ्यासोकारस्येत्त्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे। असिस्रवत्। (९) अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च। बोभूयते। (१०) अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च। अटाट्यते। (११) एषामभ्यासस्य नीगागमः स्यात् यङ्यङ्लुकोः। वनीवच्यते। (१२) अनुनासिकान्तस्याऽङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात्। यंयम्यते। (१३) एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः।

८७ चरफलोश्च ।
८८ उत्परस्याऽतः
८९ ति च ।
९० रीगृदुपधस्य च ।
९१ रुग्रिकौ च लुकि ।
९२ ऋतश्च ।
९३ सन्वल्लघुनि चङ्परेऽनग्लोपे ।
९४ दीर्घो लघोः ।
९५ अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ।
९६ विभाषा वेष्टिचेष्ट्योः ।
९७ ई च गणः ।
[ 'णौच शीङः शाच्छोः शर्पूर्वाः स्रवति सप्तदश' ]॥

जञ्जप्यते । ( १ ) अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । (२) चरफलोरभ्यासात्परस्याऽत उत्स्याद्यङ्यङ्लुकोः । चञ्चूर्यते । (३) चरफलोरत उत्स्यात्तादौ किति । प्रफुल्तः । ( ४ ) ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृत्यते । ( ५ ) ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि । ( ६ ) ऋदन्ताद्धातोरपि एते आगमा स्युर्यङ्लुकि । ( ७ ) अङ्गसञ्ज्ञानिमित्तं यच्चङ्परं, णिरिति यावत्, तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सन्नीव कार्यं स्याण्णावग्लोपेऽसति । अचीकमत । ( ८ ) लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । ( ९ ) एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ् परे णौ । अपप्रथत् । (१०) अभ्यासस्याऽत्त्वं वा स्याच्चङ्परे णौ । अववेष्टत् । (११) गणेरभ्यासस्य ई स्याच्चङ् परे णौ । चादत् । अजीगणत् ।

इति सप्तमाध्यायस्य चतुर्थः पादः ।

# अथ अष्टमोऽध्यायः।

## प्रथमः पादः।

१ सर्वस्य द्वे।
२ तस्य परमाम्रेडितम्।
३ अनुदात्तञ्च।
४ नित्यवीप्सयोः।
५ परेर्वर्जने।
६ प्रसमुपोदः पादपूरणे।
७ उपर्यध्यधसः सामीप्ये।
८ वाक्यादेरामन्त्रितस्यासूयाऽसंमतिकोपकुत्सनभर्त्सनेषु।
९ एकं बहुव्रीहिवत्।
१० आबाधे च।
११ कर्मधारयवदुत्तरेषु।
१२ प्रकारे गुणवचनस्य।
१३ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्।

(१) अधिकारोऽयम्। (२) द्विरुक्तस्य परं रूपमाम्रेडितसञ्ज्ञं स्यात्। (३) द्विरुक्तस्य परं रूपमनुदात्तं स्यात्। दिवे-दिवे। (४) आभीक्ष्णे वीप्सायाञ्च द्योत्ये पदस्य द्विर्वचनं स्यात्। (५) परेर्वर्जने द्वित्वं स्यात्। परिपरि वङ्गेभ्यो वृष्टो देवः। (६) एषां द्वे स्तः पादपूरणे। प्रप्रायमग्निः। (७) द्वे स्तः सामीप्ये। उपर्युपरि ग्रामम्। (८) वाक्यादेरामन्त्रितस्य द्वे स्तः, असूयादिष्वर्थेषु। (९) द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्। एकैकमक्षरम्। (१०) पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च। गतगतः। (११) इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यमित्यधिकारः। (१२) सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्। पटुपट्वी। (१३) प्रियसुखयोर्द्वे वा स्तः

१४ यथास्वे यथायथम् ।
१५ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ।
१६ पदस्य ।
१७ पदात् ।
१८ अनुदात्तं सर्वमपादादौ ।
१९ आमन्त्रितस्य च ।
२० युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ॥१॥
२१ बहुवचनस्य वस्नसौ ।
२२ तेमयावेकवचनस्य ।
२३ त्वामौ द्वितीयायाः ।
२४ न चवाहाहैवयुक्ते ।
२५ पश्यार्थैश्चानालोचने ।
२६ सपूर्वायाः प्रथमाया विभाषा ।

अकृच्छ्रे । प्रियप्रियेण ददाति ।

(१) योऽयमात्मा यच्चात्मीयं तद्यथास्वं, तत्र यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते । यथायथम् । (२) द्विशब्दस्य द्विर्वचनं पूर्वपदस्याऽम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु । द्वन्द्वं मन्त्रयते । (३) अधिकारोऽयम् । प्रागपदान्तात् । (४) अधिकारोऽयं 'कुत्सने सुपी'त्यतः प्राक् । (५) इदं पदत्रयमधिक्रियते । (६) पदात्परस्याऽपादादिस्थितस्य आमन्त्रितस्य सर्वस्याऽनुदात्तः स्यात् । (७) पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वांनावावित्यादेशौ स्तस्तौ चाऽनुदात्तौ । (८) उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । (९) उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्तेमे एतौ स्तः ।

(१०) द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः । (११) चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां माञ्च रक्षतु । (१२) अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । (१३) विद्यमान-

२७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ।
२८ तिङ्ङतिङः ।
२९ न लुट् ।
३० निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ।
३१ नह प्रत्यारम्भे ।
३२ सत्यं प्रश्ने ।

पूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । (१) तिङन्तात्पदाद्गोत्रादीन्यनुदात्तानि एतयोः । पचति गोत्रम् । (२) अतिङन्तात्पदात्परं तिङन्तं निहन्यते । अग्निमीळे । (३) लुडन्तं न निहन्यते । श्वः कर्त्ता । (४) एतैर्निपातैर्युक्तं न निहन्यते । यदग्ने । (५) नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । नह भोक्ष्यसे । (६) सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने । सत्यं भोक्ष्यसे ? ।

३३ अङ्गाप्रातिलोम्ये ।
३४ हि च ।
३५ छन्दस्यनेकमपि साकाङ्क्षम् ।
३६ यावद्यथाभ्याम् ।
३७ पूजायां नाऽनन्तरम् ।
३८ उपसर्गव्यपेतं च ।
३९ तुपश्यपश्यताहैः पूजायाम् ।

(७) अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तम् । अङ्ग कुरु । (८) 'हि'-युक्तं तिङन्तं नानुदात्तम् । आहि ष्मा याति । (९) 'हो'त्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् । (१०) यावद्यथाभ्यां योगे तिङन्तं नानुदात्तम् । यथा चित्कण्वम् ।

(११) यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नानुदात्तम् । यावत्पचति शोभनम् । (१२) यावद्यथाभ्यां युक्तमुपसर्गव्यपेतञ्च तिङन्तं पूजायां नानुदात्तम् । यावत्प्रपचति शोभनम् । (१३) एभिर्युक्तं

४० अहो च ॥ २ ॥
४१ शेषे विभाषा ।
४२ पुरा च परीप्सायाम् ।
४३ नन्वित्यनुज्ञैषणायाम् ।
४४ किं क्रियाप्रश्नेऽनुपसर्गम-प्रतिषिद्धम् ।
४५ लोपे विभाषा ।
४६ एहिमन्ये प्रहासे लृट् ।
४७ जात्वपूर्वम् ।
४८ किंवृत्तं च चिदुत्तरम् ।
४९ आहो उताहो चानन्तरम् ।
५० शेषे विभाषा ।
५१ गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ।

तिङन्तं न निहन्यते पूजायाम् ।

(१) 'अहो'योगे नानुदात्तं पूजायाम् । (२) 'अहो'इत्यनेन युक्तं तिङन्तं वाऽनुदात्तमपूजायाम् । अहो कटं करिष्यति । (३) पुरेत्यनेन युक्तं वाऽनुदात्तं त्वरायाम् । (४) 'ननु'इत्यनेन युक्तं तिङन्तं नानुदात्त मनुज्ञाप्रार्थनायाम् । ननु गच्छामि । (५) क्रियाप्रश्ने वर्त्तमानेन किं-शब्देन युक्तं तिङन्तं नानुदात्तम् । किं द्विजः पचति ?। (६) किमोऽप्रयोगे उक्तं वा। देवदत्तः पचत्याहोस्विद्गच्छति ? । (७) 'एहि मन्ये' इत्यनेन युक्त लृडन्तं नानुदात्तं क्रीडायाम् । (८) अविद्यमानपूर्वं यज्जातु तेन युक्तं तिङन्तं नानुदात्तम् । जातु भोक्ष्यसे । (९) अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नाऽनुदात्तम् । कश्चिद्भुङ्क्ते । (१०) 'आहो' 'उताहो' इत्याभ्यां युक्तं तिङन्तं नानुदात्तम् । (११) आभ्यां युक्तं व्यवहितं तिङन्तं वाऽनुदात्तम् । आहो देवः पचति । (१२) गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तं यत्रैव कारकं लोट् तत्रैव लृडपि चेत्। आगच्छ देव ग्रामं द्रक्ष्यस्येनम्।

५२ [1]लोट् च ।

५३ [2]विभाषितं सोपसर्गमनुत्तमम् ।

५४ [3]हन्त च ।

५५ [4]आम एकान्तरमामन्त्रितमनन्तिके ।

५६ [5]यद्धितुपरं छन्दसि ।

५७ [6]चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।

५८ [7]चादिषु च ।

५९ [8]चवायोगे प्रथमा ।

६० [9]हेति क्षियायाम् । ३ ॥

६१ [10]अहेति विनियोगे च ।

६२ [11]चाहलोपे एवेत्यवधारणम् ।

६३ [12]चादिलोपे विभाषा ।

६४ [13]वैवावेति च च्छन्दसि ।

(१) लोडन्तं गत्यथलोटा युक्तं नाऽनुदात्तम् । आगच्छ देव ग्रामं पश्य । (२) लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वाऽनुदात्तम् । (३) हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वाऽनुदात्तम् । हन्त प्रविश ।

(४) आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तम् । आम् पचसि देवदत्त । (५) यद्धितुपरं तिङन्तं छन्दसि नानुदात्तम् । उदसृजो यदङ्गिरः । (६) एषु षट्सु परतस्तिङन्तं नानुदात्तम् । देवः पचति चन ।

(७) चवाहाहैवेषु परेषु तिङन्तं नानुदात्तम् । देवः पचति च खादति च । (८) चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता । (९) ह्युक्ता प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता धर्मव्यतिक्रमे । (१०) अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता, नानाप्रयोजननियोगे, क्षियायाञ्च । (११) च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । (१२) चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । (१३) आभ्यां युक्त

६५ एकान्याभ्याम् समर्थाभ्याम् ।
६७ यद्वृत्तान्नित्यम् ।
६७ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ।
६८ सगतिरपि तिङ् ।
६९ कुत्सने च सुप्यगोत्रादौ ।
७० गतिर्गतौ ।
७१ तिङि चोदात्तवति ।
७२ आमन्त्रितं पूर्वमविद्यमानवत् ।
७३ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ।
७४ विभाषितं विशेषवचने ।
['सर्वस्य बहुवचनस्य शेषेऽहेति चतुर्दश']

प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्दसि । (१) आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नाऽनुदात्ता छन्दसि । (२) यत्र पदे यच्छब्दस्ततः परं तिङन्तं नानुदात्तम् । यत्रभुङ्क्ते । (३) पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम् । काष्ठाध्यापकः । (४) पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठं प्रपचति । (५) कुत्सने च सुबन्ते परे सगतिरपि तिङनुदात्तः । पचति पूति । (६) गतिरनुदात्तो गतौ परे । अभ्युद्धरति । (७) उदात्तवति तिङि गतिरनुदात्तः । यत्प्रपचति । (८) पूर्वमामन्त्रितमविद्यमानवद्भवति । अग्ने तव । (९) विशेष्यं समानाधिकरणे आमन्त्रिते परे नाऽविद्यमानवत्स्यात् । (१०) बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषण परेऽविद्यमानवद्वा । यूयं प्रभवः । देवाः शरण्याः ।

इति अष्टमाध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१ पूर्वत्राऽसिद्धम् ।

२ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।

३ न मु ने ।

४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।

५ एकादेश उदात्तेनोदात्तः ।

६ स्वरितो वाऽनुदात्ते पदादौ ।

७ नलोपः प्रातिपदकान्तस्य ।

८ न ङिसम्बुद्ध्योः ।

९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।

१० झयः ।

११ संज्ञायाम् ।

(१) सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । (२) सुब्विधौ स्वरविधौ सञ्ज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र । (३) नाभावे कर्त्तव्ये कृते च मुभावो नाऽसिद्धः । अमुना । (४) उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात् । अभ्यभि । (५) उदात्तेन सहैकादेश उदात्तः स्यात् । वोऽश्वाः ।

(६) अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । वीदं ज्योतिः । (७) प्रातिपदिकसञ्ज्ञकं यत्पदं तदन्तस्य नस्य लोपः स्यात् । राजा । (८) नस्य लोपो न स्यान्ङौ सम्बुद्धौ च । परमे व्योमन् । (९) मवर्णावर्णान्तान्मवर्णाऽवर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात् । ज्ञानवान् । (१०) झयन्तान्मतोर्मस्य वः स्यात् । विद्युत्वान् । (११) मतोर्मस्य वः

१२ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती।[1]
१३ उदन्वानुदधौ च।[2]
१४ राजन्वान्सौराज्ये।[3]
१५ छन्दसीरः।[4]
१६ अनो नुट्।[5]
१७ नाद्धस्य।[6]
१८ कृपो रो लः।
१९ उपसर्गस्यायतौ।
२० ग्रो यङि। १॥
२१ अचि विभाषा।
२२ परेश्च घाऽङ्कयोः।[11]
२३ संयोगान्तस्य लोपः।[12]
२४ रात्सस्य।[13]
२५ धि च।[14]

स्यात्सञ्ज्ञायाम्। अहीवती। (१) एते षट् सञ्ज्ञायां निपात्यन्ते। (२) उदकस्य उदन्भावो मतावुदधौ सञ्ज्ञायाञ्च। (३) राजन्वानिति निपात्यते सौराज्ये गम्ये। (४) इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वश्छन्दसि। हरिवो मेदिनं त्वा। (५) अनन्तान्मतोर्नुट् छन्दसि। अक्षण्वन्तः। (६) नकारान्तात्परस्य घसञ्ज्ञकस्य नुडागमः स्याच्छन्दसि। सुपथिन्तरः। (७) कृपो यो रेफस्तस्य लः स्यात्। कृपेरृकारस्यावयवो यो रेफसदृशस्तस्य लकारसदृशः स्यात्। कल्पते। (८) अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। (९) गिरते रेफस्य लत्वं स्याद्यङि। जेगिल्यते। (१०) गिरते रेफस्य लत्वं वा स्यादजादौ। गिलति। (११) परे रेफस्य लो वा स्यात्, घशब्देऽङ्कशब्दे च। पलिघः। (१२) संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्। गोमान्। (१३) रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। ऊर्क्। (१४) धादौ प्रत्यये परे सस्य लोपः

२६ झलो झलि[1] ।
२७ ह्रस्वादङ्गात्[2] ।
२८ इट ईटि[3] ।
२९ स्कोः संयोगाद्योरन्ते च[4] ।
३० चोः कुः[5] ।
३१ हो ढः[6] ।
३२ दादेर्धातोर्घः[7] ।
३३ वा द्रुहमुहष्णुहष्णिहाम्[8] ।
३४ नहो धः[9] ।
३५ आहस्थः[10] ।
३६ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः[11] ।
३७ एकाचो बशो भष् झषन्तस्य स्ध्वोः[12] ।
३८ दधस्तथोश्च[13] ।
३९ झलां जशोऽन्ते[14] ।

स्यात् । एधिताध्व । (१) झलः परस्य सस्य लोपः स्याज्झलि । अदाग्धाम् । (२) सिचो लोपः स्याज्झलि । अभूत । (३) इटः परस्य सस्य लोपः स्यादीटि परे । आसीत् । (४) पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । (५) चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । (६) हस्य ढः स्याज्झलि पदान्ते च । लिट् । (७) उपदेशे दादेर्धातोर्हस्य घःस्याज्झलि पदान्ते च । धुक् । (८) एषां हस्य वा घः स्याज्झलि पदान्ते च । ध्रुट् । (९) नहो हस्य धः स्याज्झलि पदान्ते च । उपानत् । (१०) आहस्थकारोऽन्तादेशः स्याज्झलि परे । आत्थ । (११) व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदन्ते च । (१२) धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च । घुक् । (१३) द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः । धत्तः । (१४) पदान्ते झलां जशः स्युः ।

४० झषस्तथोर्धोऽधः । २ ॥
४१ षढोः कः सि ।
४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।
४३ संयोगादेरातो धातोर्यण्वतः
४४ ल्वादिभ्यः ।
४५ ओदितश्च ।
४६ क्षियो दीर्घात् ।
४७ श्योऽस्पर्शे ।
४८ अञ्चोऽनपादाने ।
४९ दिवोऽविजिगीषायाम् ।
५० निर्वाणोऽवाते ।
५१ शुषः कः ।
५२ पचो वः ।
५३ क्षायो मः ।
५४ प्रस्त्योऽन्यतरस्याम् ।

वागीशः । (१) झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । लिषेद्ध । (२) षस्य ढस्य च कः स्यात्सकारे परे । वक्ष्यति । (३) रेफदकाराभ्यां परस्य निष्ठातस्य नः स्यान्निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च । (४) निष्ठातस्य नः स्यात् । द्राणः । (५) एकविंशतेर्ल्वादिभ्यो निष्ठातस्य नः स्यात् । लूनः । (६) ओदितो धातोर्निष्ठातस्य नः स्यात् । शुग्नः । (७) दीर्घात्क्षियो निष्ठातस्य नः स्यात् । क्षीणवान् ।

(८) श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । शीनं घृतम् । (९) अञ्चो निष्ठातस्य नः स्यान्नत्वपादाने । समक्नः । (१०) दिवो निष्ठातस्य नःस्यादविजिगीषायाम् । द्यूनः । (११) निःपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्त्ता न । निर्वाणोऽग्निः । (१२) शुषो निष्ठातस्य कः स्यात् । शुष्कः । (१३) पचो निष्ठातस्य वः स्यात् । पक्वः । (१४) क्षैधातोर्निष्ठा तस्य मः स्यात् । क्षामः । (१५) प्रस्त्यो निष्ठातस्य मो वा

५५ [1]अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ।
५६ [2]नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।
५७ न [3]ध्याख्यापॄमूर्च्छिमदाम् ।
५८ [4]वित्तो भोगप्रत्यययोः ।
५९ भित्तं [5]शकलम् ।
६० [6]ऋणमाधमर्ण्ये । ३ ॥
६१ [7]नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि ।
६२ [8]क्विन्प्रत्ययस्य कुः ।
६३ [9]नशेर्वा ।
६४ मो नो [10]धातोः ।
६५ [11]म्वोश्च ।
६६ [12]ससजुषो रुः ।
६७ [13]अवयाः श्वेतवाः पुरोडाश्च ।
६८ [14]अहन् ।

स्यात् । प्रस्तीमः । (१) एते निपात्यन्ते उपसर्गादुत्तरा न चेत् । (२) एभ्यो निष्ठातस्य नो वा । नुन्नः । (३) एभ्यो निष्ठातस्य नत्वं न । ध्यातः । (४) विन्दतेर्निष्ठान्तस्य निपातोऽर्थं भोग्ये प्रतीते चार्थे । (५) शकले भित्तमिति निपात्यते । (६) ऋधातोः क्तकारस्य नत्वं निपात्यते । ऋणम् । (७) सदेर्नन्पूर्वान्निपूर्वाच्च निष्ठाया नत्वाभावो निपात्यते । (८) क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात् । (९) नशेः कवर्गोऽन्तादेशो वा स्यात् पदान्ते । नक्—नट् । (१०) धातोर्मस्य नः स्यात्पदान्ते । प्रशान् । (११) मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । चक्षण्वहे । (१२) पदान्तस्य सस्य सजुषश्च रुः स्यात् । शिवोऽर्च्यः । (१३) एते निपात्यन्ते । (१४) अहन्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् ।

६९ रो[1]ऽसुपि ।

७० अ[2]म्नरूधरवरित्युभयथा छन्दसि ।

७१ भु[3]वश्च महाव्याहृतेः ।

७२ व[4]सुस्रंसुध्वंस्वनडुहां दः ।

७३ ति[5]प्यनस्तेः ।

७४ सिपि धा[6]तो रुर्वा ।

७५ द[7]श्च ।

७६ र्वो[8]रुपधाया दीर्घ इकः ।

७७ हलि च[9] ।

७८ उ[10]पधायां च ।

७९ न[11] भकुर्छुराम् ।

८० अ[12]दसोऽसेर्दादु दो मः ।४।।

८१ ए[13]त ईद्बहुवचने ।

८२ वा[14]क्यस्य टेः प्लुत उदात्तः ।

८३ प्र[15]त्यभिवादेऽशूद्रे ।

(१) अह्नो रेफादेशो न तु सुपि । अहर्गणः । (२) 'अम्नस्' इत्यादे रुर्वा रेफो वा । अम्न एव । अम्नरेव । (३) महाव्याहृतेर्भुवसित्यस्य रुर्वा रेफो वा । भुव इति । भुवरिति । (४) सान्तवस्वन्तस्य स्रसादेश्च दः स्यात्पदान्ते । (५) पदान्तस्य सस्य दः स्यात्तिपि नत्वस्तेः । अचकात् । (६) पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः । अचकाः । अचकात् । (७) धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः । अवेत् । (८) रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् पदान्ते । गीः । (९) रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । प्रतिदीव्नः । (१०) धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । ऊर्दंत । (११) भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । कुर्यात् । (१२) अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः । अमू । (१३) अदसो दात्परस्य एत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । अमी । (१४) अधिकारोऽयम् । (१५) अशूद्र-

८४ दूराद्धूते च ।
८५ हैहेप्रयोगे हैहयोः ।
८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।
८७ ओमभ्यादाने ।
८८ ये यज्ञकर्मणि ।
८९ प्रणवष्टेः ।
९० याज्यान्तः ।
९१ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।
९२ अग्नीत्प्रेषणे परस्य च ।
९३ विभाषा पृष्टप्रतिवचने हेः ।
९४ निगृह्यानुयोगे च ।
९५ आम्रेडितं भर्त्सने ।

विषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् स चोदात्तः । (१) दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । (२) एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । हे ३ राम । (३) दूराद्धूत यद्वाक्यं तस्य ऋद्भिन्नस्याऽनन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । (४) 'ओम्'शब्दस्य प्लुतः स्यात्प्रारम्भे । ओ ३ म् । (५) 'ये' इत्यस्य यज्ञकर्मणि प्लुतः स्यात् । ये ३ यजामहे । (६) यज्ञकर्मणि टेरोमित्यादेशः स्यात् । जिन्वतोम् । (७) ये याज्या नाम मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि । (८) एषामादेः प्लुतो यज्ञकर्मणि । हव्यवाहा ३ म् । (९) अग्नीधः प्रेषणे आदेः प्लुतः स्यात्तस्मात्परस्य च । ओ ३ श्रा ३ वय । (१०) पृष्टप्रतिवचने हेः प्लुतो वा । अकार्षीः कटम् ! अकार्षं हि ३ । (११) निगृह्यानुयोगे यद्वाक्यं तस्य टेः प्लुतो वा । अद्यामावास्यत्यात्थ ३ (१२) भर्त्सने आम्रेडितं प्लवते । दस्यो दस्यो ३ घातयामि त्वाम् ।

९६ अङ्गयुक्तं तिङाकाङ्क्षम् ।
९७ विचार्यमाणानाम् ।
९८ पूर्वं तु भाषायाम् ।
९९ प्रतिश्रवणे च ।
१०० अनुदात्तं प्रश्नान्ताभि-पूजितयोः । ५ ॥
१०१ चिदिति चोपमार्थे प्रयुज्यमाने ।
१०२ उपरि स्विदासीदिति च ।
१०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ।
१०४ क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्
१०५ अनन्त्यस्यापि प्रश्नाख्यानयोः ।
१०६ प्लुतावैच इदुतौ ।
१०७ एचोऽप्रगृह्यस्यादूराद्धूते

(१) अङ्गेत्यनेन युक्तं तिङन्तं प्लवते । अङ्ग कूज ३ इदानीं ज्ञास्यति । )२) विचार्यमाणानां वाक्यानां टेः प्लुतः स्यात् । (३) विचार्यमाणानां पूर्वमेव प्लवते । अहिर्नु ३ रज्जुर्नु । ( ४ ) वाक्यस्य टेः प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुखेयच गां मे देहि । हन्त ते ददामि ३ । (५) प्रश्नान्तेऽभिपूजिते च अनुदात्तः प्लुतः स्यात् । अभिभूता ३ इ । (६) उपमार्थे चिदिति प्रयुज्यमाने वाक्यस्य टेरनुदात्तः प्लुतः । अग्नि-चिद्भाया३त् । (७) टेः प्लुतोऽनुदात्तः स्यात् । उपरिस्विदासी३त् । (८) स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये । (९) आकाङ्क्षस्य टेः स्वरितः प्लुतः स्यात् क्षीयादौ । (१०) अनन्त्यस्यान्त्यस्यापि च पदस्य टेः स्वरितः प्लुत एतयोः ।(११)दूराद्धूतादिपु प्लुतो विहितस्तत्रैव एचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ३तिकायन । (१२) अप्रगृह्यस्य एचो दूराद्धूते प्लुतविपये पूर्वस्याद्धस्य अकारः प्लुतः स्यादुत्तरस्यार्धस्य

पूर्वस्यार्धस्यादुत्तरस्येदुतौ ।
१०८ तयोर्य्वावचि संहितायाम् ।
[ पूर्वत्राचिषढोर्नसत्त्वैतदृ-
चिदित्यष्टौ' ] ॥

## अथ तृतीयः पादः ।

१ मतुवसो रु सम्बुद्धौ छन्दसि ।
२ अत्रानुनासिकः पूर्वस्य तु वा ।
३ आतोऽटि नित्यम् ।
४ अनुनासिकात् परोऽनुस्वारः ।
५ समः सुटि ।
६ पुमः खय्यम्परे ।
७ नश्छव्यप्रशान् ।
८ उभयथर्क्षु ।
९ दीर्घादटि समानपादे ।
१० नॄन्पे ।
११ स्वतवान्पायौ ।

इदुतौ स्तः । (८) इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । अग्ना ३ याशा ।

इत्यष्टमाध्यायस्य द्वितीयः पादः ।

---

(१) मत्वन्तस्य वस्वन्तस्य च रुः स्यात् । हरिवो मेदिनं त्वा । (२) अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् । संस्कर्त्ता । (३) अटि परतो रोः पूर्वस्य अतः स्थाने नित्यमनुनासिकः । महाँइन्द्रः । (४) अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् । संस्कर्त्ता । (५) समो रुः स्यात्सुटि । संस्कर्त्ता । (६) अम्परे छवि नकारान्तस्य पदस्य रुःस्यान्नतु प्रशान्शब्दस्य । शार्ङ्गिंश्छिन्धि । (८) अम्परे छवि नकारस्य रुर्वा । पशूँस्ताँश्चक्रे । ( ९ ) दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाऽटौ एकपादस्थौ स्याताम् । महाँ इन्द्रो वः । (१०) नॄनित्यस्य रुः स्याद्वा पकारे परे । नॄः पाहि । (११) स्वतवानि-

१२ कानाम्रेडिते ।
१३ ढो ढे लोपः ।
१४ रो रि ।
१५ खरवसानयोर्विसर्जनीयः ।
१६ रोः सुपि ।
१७ भोभगोअघोअपूर्वस्य योऽशि
१८ व्योर्लघुप्रयत्नतरः शाकटायनस्य ।
१९ लोपः शाकल्यस्य ।
२० ओतो गार्ग्यस्य ॥ १ ॥
२१ उञि च पदे ।
२२ हलि सर्वेषाम् ।
२३ मोऽनुस्वारः ।
२४ नश्चापदान्तस्य झलि ।

ल्यस्य रुर्वा पायौ । स्वतवाँ पायुरग्ने । (१) कान्नकारस्य रुःस्यादाम्रेडिते परे । काँस्कान् । (२) ढस्य लोपः स्याड्ढे परे । गाढा । (३) रेफस्य रेफे परे लोपः स्यात् । पुना रमते । (४) खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । रामः । (५) सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यरेफस्य । पयःसु । (६) एतत्पूर्वस्य रोर्यादेशः स्यादशि परे । देवा इह ।

(७) पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे । भोयच्युत । (८) अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे । हर इह । (९) ओकारात्परस्य पदान्तस्याऽलघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । भो अच्युत । (१०) अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे । स उ एकाग्निः । (११) भो भगो अघो अपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन । भो देवाः । (१२) मान्तस्य पदस्याऽनुस्वारः स्याद्धलि । हरिं वन्दे । (१३) नस्य भस्य चाऽपदान्तस्य झल्यनुस्वारः स्यात् । यशांसि ।

२५ मो[1] राजि समः क्वौ ।
२६ हे मपरे[2] वा ।
२७ नपरे[3] नः ।
२८ ङ्णोः[4] कुक्टुक्शरि ।
२९ डः[5] सि धुट् ।
३० नश्च[6] ।
३१ शि[7] तुक् ।
३२ ङमो[8] ह्रस्वादचि ङमुण्नि-त्यम् ।
३३ मय[9] उञो वो वा ।
३४ विसर्जनीयस्य[10] सः ।
३५ शर्परे[11] विसर्जनीयः ।
३६ वा[12] शरि ।
३७ कुप्वोः[13] ≍क ≍पौ च ।
३८ सोऽपदादौ ।
३९ इणः[15] षः ।

(१) क्विबन्ते राजतौ परं समो मस्य म एव स्यात्। सम्राट्। (२) मपरे हकारे परे मस्य म एव स्याद्वा। किम् ह्मलयति। (३) नपरे हकारे मस्य नः स्याद्वा। किं ह्नुते। (४) ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि। प्राङ्क्ष्ठः। (५) डात्परस्य सस्य धुड्वा स्यात्। षट्त्सन्तः। (६) नकारान्तात्सस्य धुड्वा। सन्त्सः। (७) नस्य पदान्तस्य शे परे तुग्वा स्यात्। सञ्च्छम्भुः। (८) ह्रस्वात्परो यो ङम् तदन्तं यत्पदं, तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात्। सन्नच्युतः। (९) मयः परस्य उञो वो वा स्यादचि किम्वुक्तम्। (१०) खरि विसर्जनीयस्य सः स्यात्। (११) शर्परे खरि विसर्जनीस्य विसर्जनीयो न त्वन्यत्। कः त्सरुः। (१२) शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते। (१३) कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः। नॄः पाहि। (१४) विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः। पयस्पाशम्। (१५) इणः परस्य विस-

४० नमस्पुरसोर्गत्योः ॥२५॥
४१ इदुदुपधस्य चाप्रत्ययस्य ।
४२ तिरसोऽन्यतरस्याम् ।
४३ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।
४४ इसुसोः सामर्थ्ये ।
४५ नित्यं समासेऽनुत्तरपदस्थस्य
४६ अतः कृकमिकंसकुम्भपात्र
कुशाकर्णीष्वनव्ययस्य ।
४७ अधःशिरसी पदे ।
४८ कस्कादिषु च ।
४९ छन्दसि वाप्राम्रेडितयोः ।
५० कःकरत्करतिकृधिकृतेष्वन-
दितेः ।

र्गस्य षः स्यात्पूर्वविषय । सपिष्पाशम् ।
(१) गतिसञ्ज्ञयोरनयोर्विसर्गस्य सः स्यात्कुप्वोः परयोः । नमस्करोति । (२) इकारोकारोपधस्याऽप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः । निष्प्रत्यूहम् । (३) तिरसः सो वा स्यात्कुप्वोः । तिरस्कर्त्ता । (४) कृत्वोऽर्थे वर्त्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः । द्विष्करोति । (५) एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति । (६) इसुसोर्विसर्गस्यानुत्तरपदस्थस्य नित्यं षः स्यात्कुप्वोः परयोः । सर्पिष्कुण्डिका ।

(७) अकारादुत्तरस्याऽनव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु, नतूत्तरपदस्थस्य । अयस्कारः । (८) एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । (९) वार्त्तिकमेतत् । कस्कादिषु विसर्गस्य सकारः षकारो वा यथायोगं स्यात्कुप्वोः । भास्करः । (१०) विसर्गस्य सो वा स्यात्कुप्वोः, प्रशब्दमाम्रेडितं च वर्जयित्वा । ऋतस्कविः । (११) एषु परतोऽनदितेर्विसर्गस्य सः स्याच्छन्दसि । प्रदिवो अयस्कः ।

५१ पञ्चम्याः परावध्यर्थे[1] ।
५२ पातौ च बहुलम्[2] ।
५३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु[3] ।
५४ इडाया वा[4] ।
५५ अपदान्तस्य मूर्धन्यः[5] ।
५६ सहेः साडः सः[6]
५७ इण्कोः[7] ।
५८ नुम्विसर्जनीयशर्व्यवायेऽपि[8] ।
५९ आदेशप्रत्यययोः[9] ।
६० शासिवसिघसीनां च[10] ॥३॥
६१ स्तौतिण्योरेव षण्यभ्यासात्[11] ।
६२ सः स्विदिस्वदिसहीनां च[12] ।
६३ प्राक्सितादड्व्यवायेऽपि[13] ।
६४ स्थादिष्वभ्यासेन चाभ्यासस्य[14] ।

(१) पञ्चमीविसर्गस्य सः स्यादुपरिभवार्थे परिशब्दे परतः । दिवस्परि । (२) पञ्चमीविसर्गस्य बहुलं सः स्यात्पातौ परे । दिवस्पातु । (३) षष्ठीविसर्गस्य सः स्यात्पत्यादौ । वाचस्पतिम् । (४) इडाया विसर्गस्य सः स्यात्पतिपुत्रादिषु परेषु । इडायास्पुत्रः । (५) अधिकारोऽयम् । (६) साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् । (७) अधिकारोऽयम् । (८) एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । पिपठीष्षु । (९) इण्कवर्गाभ्यां परस्याऽपदान्तस्यादेशः प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः स्यात् । (१०) इण्कुभ्यां परस्य एषां सस्य षः स्यात् । ऊषतुः । (११) अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्षभूते सनि नान्यस्य । तुष्टूषति । (१२) अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः षणि परे । (१३) सेवसितेत्यत्र सितशब्दात्प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । (१४) प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि

६५ उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्।
६६ सदिरप्रतेः ।
६७ स्तन्भेः ।
६८ अवाच्चालम्बनाविदूर्ययोः ।
६९ वेश्च स्वनो भोजने ।
७० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ।
७१ सिवादीनां वाऽड्व्यवायेऽपि
७२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।
७३ वेः स्कन्देरनिष्ठायाम् ।
७४ परेश्च ।
७५ परिस्कन्दः प्राच्यभरतेषु ।
७६ स्फुरतिस्फुलत्योर्निर्निविभ्यः
७७ वेः स्कभ्नातेर्नित्यम् ।
७८ इणः षीध्वंलुङ्लिटां धोऽ-

षत्वं स्यात् । (१) उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् । (२) प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् । (३) स्तन्भेः सौत्रस्य सस्य षः स्यात् । (४) अवात्स्तन्भेरेतयोरर्थयोःसस्य षत्वं स्यात् । (५) व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने । (६) परिनिविभ्यः परेषामेषां सस्य षः स्यात् । निषेधति । (७) परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि ।

(८) एभ्यः परस्याऽप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते जलं । (९) वेः परस्य स्कन्देरनिष्ठायां षत्वं वा स्यात् । विष्कन्ता । (१०) अस्मात्परस्य स्कन्देः सस्य षो वा । परिष्कन्दति । (११) पूर्वेणप्राप्तस्य मूर्धन्यस्याभावो निपात्यते । (१२) परिनिविभ्यः परयोः स्फुरतिस्फुलत्योः षत्वं वा स्यात् । निःष्फुरति । (१३) वेः परस्य स्कभ्नातेः सस्य षः स्यात् । विष्कभ्नाति ।(१४) इणन्तादङ्गात्परेषां. षीध्वंलुङ्लिटां धस्य

ङ्गात् ।
७९ विभाषेटः ।
८० समासेऽङ्गुलेः सङ्गः ॥४॥
८१ भीरोः स्थानम् ।
८२ अग्नेः स्तुत्स्तोमसोमाः ।
८३ ज्योतिरायुषः स्तोमः ।
८४ मातृपितृभ्यां स्वसा
८५ मातुःपितुर्भ्यामन्यतरस्याम् ।
८६ अभिनिसः स्तनः शब्दसंज्ञायाम् ।
८७ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।
८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः
८९ निनदीभ्यां स्नातेः कौशले ।
९० सूत्रं प्रतिष्णातम् ।
९१ कपिष्ठलो गोत्रे ।
९२ प्रष्ठोऽग्रगामिनि ।

मूर्धन्यः स्यात् । पर्यांचकृढ्वे । (१) इणः परो य इट् ततः परेषां षीध्वं लुङ्लिटां धस्य वा ढः स्यात् । (२) अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । (३) भीरुशब्दात्स्थानस्य सस्य मूर्धन्यः स्यात्समासे । (४) अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । (५) आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे । (६) आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे । (७) आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःष्वसा । (८) असमासेऽस्तनेः सस्य मूर्धन्यः । अभिनिष्टानो वर्णः । (९) उपसर्गेणः प्रादुसश्च परस्याऽस्तेः सस्य षः साचकारेऽचि च परे । निष्यात् । (१०) एभ्यः सुप्यादेः सस्य षः स्यात् । सुषुपुषतुः । (११) आभ्यां स्नातेः सस्य षः स्यात्कौशले गम्ये । निष्णातः शास्त्रेषु । (१२) प्रतेः स्नातेः षत्वं स्यात् । (१३) गोत्रेऽभिधित्सिते कपिष्ठल इति निपात्यते । (१४) अग्रगामिनि 'प्रष्ठ'

९३ [1]वृक्षासनयोर्विष्टरः ।
९४ [2]छन्दोनाम्नि च ।
९५ [3]गवियुधिभ्यां स्थिरः ।
९६ [4]विकुशमिपरिभ्यः स्थलम् ।
९७ [5]अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।
९८ [6]सुषामादिषु च ।
९९ [7]पाति संज्ञायामगात् ।
१०० [8]नक्षत्राद्वा ॥५॥
१०१ [9]ह्रस्वात्तादौ तद्धिते ।
१०२ [10]निसस्तपतावनासेवने ।
१०३ [11]युष्मत्तत्ततक्षुःष्वन्तःपादम् ।
१०४ [12]यजुष्येकेषाम् ।
१०५ [13]स्तुतस्तोमयोश्छन्दसि ।
१०६ [14]पूर्वपदात् ।
१०७ [15]सुञः ।

इति निपात्यते । (१) अनयोर्विपूर्वस्य स्त्रः षत्वं निपात्यते । (२) विपूर्वात्स्तृणोतेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि । (३) आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । (४) एभ्यः स्थलस्य सस्य षः स्यात् । (५) एभ्यः स्थस्य सस्य षः स्यात् । द्विष्ठः । (६) सस्य मूर्धन्यः । सुषामा । (७) गणसूत्रमेतत् । सस्य मूर्धन्यः । हरिषेणः । (८) गणसूत्रमेतत् । सस्य सञ्ज्ञायामगकारान्मूर्धन्यो वा । (९) ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । निष्ट्यः । (१०) निसः सकारस्य मूर्धन्यः स्यात् । निष्टप्तं रक्षः । (११) पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु । त्रिभिष्ट्वं देव । (१२) युष्मत्तत्ततक्षुःषु परतः सस्य मूर्धन्यो वा । (१३) अनयोः परतः सस्य षः । (१४) पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा । (१५) पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य

१०८ सनोतेरनः ।

१०९ [2]सहेः पृतनर्ताभ्यां च ।

११० [3]न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।

१११ [4]सात्पदाद्योः ।

११२ सि[5]चो यङि ।

११३ से[6]धतेर्गतौ ।

११४ [7]प्रतिस्तब्धनिस्तब्धौ च ।

११५ [8]सोढः ।

११६ [9]स्तम्भुसिवुसहां चङि ।

११७ [10]सुनोतेः स्यसनोः ।

११८ [11]सदेः परस्य लिटि ।

११९ नि[12]व्यभिभ्योऽड्व्यवाये वा छन्दसि ।

['मतुवसोरुञि चेदुदुपधस्य स्तौतिण्योर्भीरोर्हस्वात्तादावेकोनविंशतिः'] ॥

सस्य षः । (१) अनन्तस्य सनोतेः सस्य षः स्यात् । गोषा इन्द्रो नृषा । (२) आभ्यां सहेः सस्य षः । पृतनाषाहम् । (३) रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । उस्रः । (४) सस्य षत्वं न स्यात् । दधिसिञ्चति । (५) सिचः सस्य षो न स्याद्यङि । निसेसिच्यते । (६) गत्यर्थस्य षत्वं न स्यात् । गङ्गां विसेधति । (७) अत्र षत्वं न स्यात् । (८) सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् । परिसोढा । (९) उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । (१०) स्यसनि च परे सुञः षो न स्यात् । विसोष्यति । (११) सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि । निषसाद । (१२) निव्यभिभ्योऽड्व्यवायेऽपि छन्दसि वा सस्य षः स्यात् ।

इत्यष्टमाध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः ।

१ रषाभ्यां नो णः समानपदे ।
२ अट्कुप्वाङ्नुम्व्यवायेऽपि ।
३ पूर्वपदात्संज्ञायामगः ।
४ वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ।
५ प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्श्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ।
६ विभाषौषधिवनस्पतिभ्यः ।
७ अह्नोऽदन्तात् ।
८ वाहनमाहितात् ।
९ पानं देशे ।
१० वा भावकरणयोः ।
११ प्रातिपदिकान्तनुम्विभक्तिषु च ।

(१) एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् समानपदे । चतुर्णाम् । (२) अट्, कवर्गः, पवर्गः, आङ्, नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात् । रामेण । (३) पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां नतु गकारव्यवधाने । द्रुणसः । (४) वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः । पुरगावणम् । (५) एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । (६) एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम् । (७) अदन्तपूर्वपदस्थाद्रेफात्परस्य अह्नादेशस्य नस्य णः स्यात् । पूर्वाह्णः । (८) आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । (९) पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये । क्षीरपाणाः । (१०) पूर्वपदस्थान्निमित्तात्परो भावे करणे च यः पानशब्दस्तस्य नस्य णत्वं स्यात् । क्षीरपाणम् । (११) पूर्वपदस्थान्निमि-

१२ एकाजुत्तरपदे णः ।
१३ कुमति च ।
१४ उपसर्गादसमासेऽपि णोपदेशस्य ।
१५ हिनुमीना ।
१६ आनि लोट् ।
१७ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।
१८ शेषे विभाषाऽकखादावषान्त उपदेशे ।
१९ अनितेः ।
२० अन्तः । १ ॥
२१ उभौ साभ्यासस्य ।

त्तात्परस्य एषु स्थितस्य नस्य णो वा । माषवापिणौ । (१) एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णत्वं स्यात् । पुनर्भूणाम् । (२) कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामाणि । (३) उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णत्वं स्यात् समासेऽसमासेऽपि। प्रणदति । (४) उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति । (५) उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्याऽऽनीत्यस्य नस्य णः स्यात् । प्रभवाणि । (६) उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु । प्रणिगदति । (७) उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति । (८) उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । (९) पदान्तस्यानितेर्नस्य णत्वं स्यात्, उपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् । (१०) साभ्यासस्याऽनितेरुभौ नकारौ

२२ हन्तेरत्पूर्वस्य ।
२३ वमोर्वा ।
२४ अन्तरदेशे ।
२५ अयनं च ।
२६ छन्दस्यृदवग्रहात् ।
२७ नश्च धातुस्थोरुषुभ्यः ।
२८ उपसर्गाद्बहुलम् ।
२९ कृत्यचः ।
३० णेर्विभाषा ।
३१ हलश्चेजुपधात् ।
३२ इजादेः सनुमः ।
३३ वा निंसनिक्षनिन्दाम् ।

णत्वं प्राप्नुतो निमित्त सति । प्राणिणत् । (१) योगो विभज्यते । हन्तेः । उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् । प्रहण्यात् । अत्पूर्वस्य ॥ हन्तेरपूर्वस्यैव नस्य णत्वं नान्यस्य । प्रघ्नन्ति । (२) उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः । प्रहण्वः ।

(३) अन्तःशब्दाद्धन्तेर्नस्य णः स्यात् । अन्तर्हणम् । (४) अयनस्य नस्यणोऽन्तःशब्दात्परस्य । अन्तरयणम् । (५) ऋकारान्तादवग्रहाद्धात्परस्य नस्य णः । नृमणा । (६) धातुस्थान्निमित्तात्परस्य उरुषुभ्याश्च परस्य 'नस्' इत्येतस्य णः स्यात् । अग्ने रक्षाणः । (७) उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणसः । (८) उपसर्गास्थान्निमित्तात्परस्याऽच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । (९) उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत् तत्स्थस्य नस्य णो वा । प्रयापणीयम् । (१०) हलादेरिजुपधात्कृन्नस्याऽचः परस्य णो वा स्यात् । प्रकोपणीयम् । (११) सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत् तत्स्थस्यैव । प्रेङ्खणीयम् । (१२) एषां

३४ न भाभूपूकमिगमिप्यायीवेपाम् ।
३५ षात्पदान्तात् ।
३६ नशेः षान्तस्य ।
३७ पदान्तस्य ।
३८ पदव्यवायेऽपि ।
३९ क्षुभ्नादिषु च ।
४० स्तोः श्चुना श्चुः ।२।।
४१ ष्टुना ष्टुः ।
४२ न पदान्ताट्टोरनाम् ।
४३ तोः षि ।
४४ शात् ।
४५ यरोऽनुनासिकेऽनुनासिको वा ।
४६ अचो रहाभ्यां द्वे ।
४७ अनचि च ।

नस्य णो वा स्यात् कृति परे । प्रणिंसितव्यम् । (१) एभ्यः कृत्नस्य णो न । प्रभानीयम् । (२) पदान्तात्षकारात्परस्य नस्य णो न । निष्पानम् । (३) षान्तस्य नशेर्णत्वं न स्यात् । प्रनंष्टा । (४) पदान्तस्य नस्य णत्वं न स्यात् । रामान् । (५) पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । (६) एषु णत्वं न स्यात् । (७) सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते ।

(८) स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः। (९) पदान्ताट्टवर्गात्परस्याऽनामः स्तोःष्टुर्न स्यात् । षण्णाम् । (१०) तवर्गस्य षकारे परे न ष्टुत्वम् । सन् षष्ठः । (११) शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । (१२) यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । (१३) अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । (१४) अचः परस्य यरो द्वे वा

४८ नादिन्याक्रोशे पुत्रस्य[1]।
४९ शरोऽचि[2]।
५० त्रिप्रभृतिषु शाकटायनस्य[3]।
५१ सर्वत्र शाकल्यस्य[4]।
५२ दीर्घादाचार्याणाम्[5]।
५३ झलां जश् झशि[6]।
५४ अभ्यासे चर्च[7]।
५५ खरि च[8]।
५६ वावसाने[9]।
५७ अणोऽप्रगृह्यस्यानुनासिकः[10]।
५८ अनुस्वारस्य ययि परसवर्णः[11]।
५९ वा पदान्तस्य[12]।
६० तोर्लि[13]। ३॥
६१ उदः स्थास्तम्भोः पूर्वस्य[14]।
६२ झयो होऽन्यतरस्याम्[15]।

स्तो न त्वचि। सुद्युपास्यः।
(१) पुत्रशब्दस्य न द्वित्वम् आदिनीशब्दे परे आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे। (२) अचि परे शरो न द्वेस्तः। कर्षति। (३) त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम्। इन्न्द्रः। (४) सर्वत्र शाकल्यस्य मते द्वित्वं न। अर्कः। (५) दीर्घादाचार्याणां द्वित्वं न। दात्रम्। (६) झलां स्थाने जशादेशो झशि परतः। सुद्ध्युपास्यः। (७) अभ्यासे झलां चरः स्युर्जशश्च। बभूव। (८) खरि परे झलां चरः स्युः। तच्छिवः। (९) अवसाने झलां चरो वा स्युः। रामात्-द्। (१०) अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ। (११) अनुस्वारस्य ययि परतः परसवर्ण आदेशः स्यात्। अङ्कितः। (१२) पदान्तस्याऽनुस्वारस्य ययि परतः परसवर्णो वा स्यात्। त्वङ्करोषि। (१३) तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः। (१४) उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। उत्थानम्। (१५)

६३ शश्छोऽटि ।

६४ हलो यमां यमि लोपः ।

६५ झरो झरि सवर्णे ।

६६ उदात्तादनुदात्तस्य स्वरितः ।

६७ नोदात्तस्वरितोदयमगार्ग्य-काश्यपगालवानाम् ।

६८ अ अ ।

['रषाभ्यामुभौ ष्टुना ष्टुरुदः स्थाऽष्टौ ॥']

इत्यष्टमाध्यायस्य चतुर्थः पादः ।

समाप्तश्चायमष्टमोऽध्यायः ।

झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । वाग्घरिः । (१) पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । तच्छिवः । (२) हलः परस्य यमो लोपः स्याद्वा यमि । (३) हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि । (४) उदात्तात्परस्याऽनुदात्तस्य स्वरितः स्यात् । अग्निमीळे । (५) उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात् । गार्ग्यादिमते तु स्यादेव । प्रयभारुः । (६) विवृताकारस्य स्थाने संवृताकारः स्यात् । हे शिव ।

इतिश्रीमरुमण्डलमार्त्तण्ड—पट्शास्त्रवाचस्पति—शारदावतारश्री१०८ श्रीस्नेहिरामशास्त्रिणां पौत्रेण, प्रतिवादिभयङ्करभयङ्करन्यायाचार्य-श्रीशिवनारायणशास्त्रिणां पुत्रेण; सतीसार्वभौम'श्रीराजलक्ष्मी'-गर्भसम्भवेन, श्रीगुरुप्रसादशास्त्रिणा सङ्कलितायामष्टा-ध्यायीसूत्रपाठस्य सरलाख्यां वृत्तावष्टमोऽध्यायः ।

भाद्र० शु० ४।१९९४

। श्रीः । शुभम् । श्रीः ॥